**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९८७ - ३०००
द्वितीयमुद्रणम् - १९९३ - ५०००
तृतीयमुद्रणम् - १९९७ - ५०००

मूल्यं - रू. २०.००

**मुद्रणम् -**
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

NAVAROOPAKAM - A collection of nine short plays of Samskrit, written by various authors. Publisher - SAMSKRITA BHARATI - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085. Pages -vi + 82 Price - Rs. 20-00 Thrid Print - November 1997

Printed at - Span Print, Basavanagudi, Bangalore - 4

# प्राक्कथनम्
## (प्रथममुद्रणस्य)

काव्यप्रभेदे अन्यतमेषु रूपकेषु उपरूपकेषु च अनेके प्रकाराः। तत्तस्य रूपकस्य लक्षणमनुसृत्य रचिताः ग्रन्थाः अपि बहवः। तेषु बहवः प्रकाशिताः। अप्रकाशितानां संख्या अपि न न्यूना।

कालपरिवर्तनानुगुणं रुचौ अपि परिवर्तनं दृश्यते। एषु दिनेषु तादृशानां रूपकाणाम् अपेक्षा महती वर्तते, यानि समकालिकं विषयम् अधिकृत्य सरलया भाषया रचितानि अल्पाकारकाणि च स्युः। वार्षिकोत्सवादिषु समारम्भादिषु च अन्ते मनोरञ्जनकार्यक्रमस्य अङ्गतया एतादृशानाम् अभिनयः प्रचलति। तत्र प्रेक्षकाः विशेषतः संस्कृतानभिज्ञाः। तेषाम् अरुचिः यथा न भवेत् तथा रूपकाभिनयः आयोजनीयः भवति।

एताम् आवश्यकतां मनसिकृत्य एतानि नव रूपकाणि सङ्कलितानि। अत्रत्येषु रूपकेषु भाषा सरला। शैलीविषये विशेषावधानं न दत्तम्। श्रुतां कथाम् आधारीकृत्य, स्वतन्त्रतया वा एतानि रचयितृभिः रचितानि। अन्तिमं रूपकम् अविहाय शिष्टानि सर्वाणि अल्पाकारकाणि एव। पञ्चसु दशसु वा निमेषेषु अभिनेतुं योग्यानि।

अन्तिमरूपकस्य विषये विशिष्य किञ्चित् वक्तव्यम् अस्ति। आधुनिकवस्तुविषयकम् एतत् आकारेण दीर्घम्। तत्र भागद्वयम्। समग्रस्य रूपकस्य अभिनयार्थम् अर्धघण्टा पर्याप्ता स्यात्। एकैकः भागः केवलः अपि स्वतन्त्रतया अभिनेतुं योग्यः। बालहृदयस्य

मुखद्वयं प्रदर्शनीयम् इत्यतः भागद्वये लिखितम् । अतः स्वतन्त्रविषययोः तयोः भागयोः न तथा परस्परसापेक्षता ।

एतेषां रचनावसरे लक्षणशास्त्रं मनसि न स्थापितम् । यदि शास्त्रोक्तानि लक्षणानि अत्र अन्वितानि भवन्ति, तर्हि इक्षुरसे शर्करायोगः इव महते सन्तोषाय ।

रूपकलेखकान्, मुद्रणालयकारान्, सर्वान् सहकारिबन्धून् च वयं कृतज्ञतापूर्वकं स्मरामः ।

- **प्रकाशकः**

## (तृतीयमुद्रणम् अधिकृत्य)

प्रथममुद्रणसमये एतत् पुस्तकं कन्नडलिप्या आसीत् । देवनागरीलिप्या द्वितीयमुद्रणं कृतम् । तस्यैव तृतीयमुद्रणम् एतत् । एतदवसरे सहकृतवद्भ्यः, सर्वेभ्यः कृतज्ञताः समर्प्यन्ते ।

ईश्वर सं ।। कार्तिककृष्णनवमी

२३.११.९७

- **प्रकाशकः**

# अन्तरङ्गम्

# प्रामाणिकता

**- श्री विश्वासः**

(मूलकल्पना - श्रीमती इन्दिरानाथ्)

**पात्राणि -**

रजनी

रेवती

रजन्याः माता

आपणिकः

आरक्षकाधिकारी

रङ्गनाथः

(रजन्याः गृहम् । एका उत्पीठिका । आसन्दद्वयम् । उत्पीठिकायाः उपरि कानिचन पुस्तकानि सन्ति । रजनी उपविश्य लिखन्ती अस्ति ।)

(द्वारे शब्दः - ''हरिः ओम्'' ।)

**रजनी -** हरिः ओम् । कः तत्र ?

(द्वारे - अहं रेवती ।)

**रजनी -** अहो, रेवती वा ? आगच्छतु भोः । अन्तः आगच्छतु । (रेवती आगच्छति ।)

**रजनी -** किं भोः । कः विशेषः ?

**रेवती -** विशेषः कोऽपि नास्ति । लेखनीम् आनेतुम् आपणं प्रति गन्तव्यम् । भवती अपि मया सह आगच्छति वा ?

**रजनी -** किञ्चित्कालं तिष्ठतु । अहम् एतं गृहपाठं (Homework) समाप्य आगच्छामि ।

**रेवती -** अस्तु, अहं तावत्पर्यन्तम् एतत् पुस्तकं पठामि ।

(उत्पीठिकायाः उपरि विद्यमानं पुस्तकं स्वीकृत्य उपविश्य पठति । रजनी अङ्गुलीभिः गणनां कुर्वती गृहपाठं लिखति ।)

(रजन्याः माता आगच्छति ।)

**माता -** किं भोः रेवति, उपाहारः समाप्तः वा ?

**रेवती -** आम्, समाप्तः ।

**माता -** कः उपाहारः ?

**रेवती** - मम गृहे अद्य 'इड्लि' कृतवन्तः। भवत्याः गृहे ... ?

**माता** - अहं 'दोसा' कृतवती। किञ्चित् स्वीकरोति वा ?

**रेवती** - मास्तु, मास्तु। उदरे स्थलम् एव नास्ति।

**माता** - इदानीं कुत्र प्रस्थिता ?

**रेवती** - लेखनीं कङ्कणं च आनेतुम् आपणं गच्छामि। परन्तु मम माता उक्तवती - 'एकाकिनी न गच्छतु, रजनीम् अपि नयतु' इति। रजनीं प्रेषयति वा भवती ?

**माता** - अवश्यं नयतु। रजनि, गृहपाठः समाप्तः वा ?

**रजनी** - आम्, अम्ब।

**माता** - तर्हि गच्छतु। परन्तु सावधानं गन्तव्यम्।

**रेवती** - अस्तु, वयं तथैव गच्छामः।

**माता** - आगमनसमये एकं मैसूरु स्याण्डल् सोप् आनयति वा ?

**रजनी** - अस्तु, आनयामि। धनं ददातु।

**माता** - (१० रूप्यकाणां धनपत्रं ददाति) स्वीकरोतु। सुरक्षितं स्थापयतु। सम्यक् परीवर्तः आनेतव्यः।

**रेवती** - अस्तु, गच्छामः।

**माता** - शीघ्रम् आगन्तव्यम्।

- २ -

(आपणस्य दृश्यम् । उत्पीठिकायाः उपरि कङ्कणानां बन्धः, लेखन्यः, विविधानि फेनकानि इत्यादीनि वस्तूनि सन्ति । आपणिकः किमपि लिखन् अस्ति । रजनी रेवत्या सह प्रविशति ।)

**आपणिकः** - किम् आवश्यकम् ?

**रेवती** - कङ्कणम् आवश्यकम् ।

**आपणिकः** - कीदृशं कङ्कणम् आवश्यकम् ?

**रजनी** - कीदृशम् अस्ति इति प्रदर्शयतु, पश्यामः ।

(आपणिकः बहुविधानि कङ्कणानि प्रदर्शयति ।)

**रेवती** - एतस्य मूल्यं किम् ?

(प्रदर्शयति)

**आपणिकः** - द्वादशकस्य मूल्यं चत्वारि रूप्यकाणि ।

**रजनी** - अहो ! बहु अधिकम् । तस्य मूल्यं किम् ?

**आपणिकः** - त्रीणि रूप्यकाणि ।

**रेवती** - तर्हि तदेव ददातु ।

**आपणिकः** - अस्तु । (ददाति) अन्यत् किम् आवश्यकम् ?

**रेवती** - लेखनीं प्रदर्शयतु ।

**आपणिकः** - पश्यतु ।( प्रदर्शयति)

**रेवती** - (एकां प्रदर्श्य) एषा लेखनी एव अस्तु ।

**आपणिकः** - (ददाति) कङ्कणानां त्रीणि रूप्यकाणि - लेखन्याः त्रीणि रूप्यकाणि । आहत्य षट् रूप्यकाणि ददातु ।

**रेवती** - स्वीकरोतु ।

(आपणिकः परीवर्तं ददाति । रेवती गणयति ।)

**रेवती** - किं भोः, एकं रूप्यकं न्यूनम् अस्ति ?

**आपणिकः** - (स्वगतं) अहो, बालिका बहु चतुरा अस्ति । (हसन् प्रकटं) क्षम्यताम् । स्वीकरोतु । (रजनीम् उद्दिश्य) भवती किम् इच्छति ?

**रजनी** - एकं मैसूरु स्याण्डल् फेनकं ददातु ।

(आपणिकः ददाति । रजनी धनं दत्त्वा परीवर्तं स्वीकरोति ।)

**रेवती** - तर्हि गच्छाम ?

**रजनी** - अस्तु, गच्छाम ।

- २ -

(मार्गः, केचन इतस्ततः सञ्चरन्तः भवन्ति । जनसम्मर्दं सूचयितुं वाहनानां शब्दः अपि श्रावणीयः ।)

**रेवती** - रजनि ! पश्यतु भोः, तत्र किमपि पतितम् अस्ति ।

**रजनी** - किं तत्र ?

**रेवती** - पश्याम, आगच्छतु ।

(धनस्यूतः पतितः अस्ति । रेवती स्वीकरोति ।)

**रेवती** - अहो, धनस्यूतः ।

**रजनी** - एषः कस्य धनस्यूतः स्यात् ?

रेवती - कः जानाति ?

रजनी - स्यूते किम् अस्ति इति पश्यतु भोः।

रेवती - (पश्यति) हन्त ! बहु धनम् अस्ति भोः। पश्यतु।

रजनी - सत्यं भोः। कति रूप्यकाणि सन्ति ?

रेवती - शताधिकरूप्यकाणि सन्ति। इदानीं किं कुर्मः ?

रजनी - रेवति ! बहु धनं लब्धम् अस्ति। यथेष्टं मधुरं खादाम वा ?

रेवती - तथा न करणीयं भोः। एतत् अस्माकं धनं न। ह्यः शालायाम् अस्माकं गुरुः उक्तवान् किल – 'अन्येषां धनं न स्वीकर्तव्यम्' इति ?

रजनी - तर्हि किं कुर्मः इदानीम् ?

रेवती - किं कुर्मः ?

रजनी - रेवति ! वयम् आरक्षकस्य हस्ते दद्मः वा ?

रेवती - आं, भवत्याः उपायः बहु समीचीनः अस्ति। वयम् आरक्षककार्यालयं गच्छाम।

(गच्छतः)

– ३ –

(आरक्षककार्यालयः। अधिकारी आसन्दे उपविष्टः अस्ति। अन्यः आरक्षकः स्थितः अस्ति। एका उत्पीठिका, आसन्दद्वयम्। उत्पीठिकायाः उपरि दूरवाणी।)

रजनी - श्रीमन्, अन्तः आगच्छाम वा ?

**अधिकारी** – आगच्छतु, आगच्छतु । (रेवतीं प्रति) किमर्थम् अत्र आगतवती भवती ?

**रेवती** – श्रीमन् ! मार्गे एकः धनस्यूतः लब्धः । तं भवतः हस्ते दातुम् आगतवत्यौ ।

**अधिकारी** – कुत्र अस्ति स्यूतः ? ददातु ।

(ददाति । आरक्षकः स्वीकरोति ।)

**अधिकारी** – भोः, तत् उद्घाटयतु । अन्तः किम् अस्ति ?

**आरक्षकः** – श्रीमन्, बहु धनम् अस्ति ।

**अधिकारी** – कति रूप्यकाणि सन्ति ?

**आरक्षकः** – (गणयति) नवशतं रूप्यकाणि सन्ति ।

**अधिकारी** – अत्र ददातु । अहं पश्यामि । (पश्यति) सत्यं, बहु धनम् अस्ति । अहो, अत्र सङ्केतः (Address) अस्ति ।

(पठति)

श्री रङ्गनाथ राव्, न्यायवादी
गृ.स. ३५, ४ उपमार्गः
३ मुख्यमार्गः, ५ ब्लाक्
जयनगरं, बेङ्गलूरु – ३०
दूरवाणीसंख्या – ६४३३५४

बहु समीचीनम् । तस्य दूरवाणीसंख्या अस्ति । अहं दूरवाण्या सम्भाषणं करोमि । उपविश्यताम् ।

(दूरवाणीसम्भाषणस्य अभिनयं करोति ।)

हरिः ओम्, रङ्गनाथराव्-महोदयः वा ? नमस्कारः । अहम् आरक्षक-अधिकारी । अत्र गान्धिबजार्-

आरक्षक-कार्यालयतः वदामि । भवतः धनस्यूतः लब्धः अस्ति । अत्र एव अस्ति । शीघ्रम् आगच्छतु ... अस्तु । आगच्छतु ... धन्यवादः ।

(रेवतीं प्रति) किं भोः, तावत् धनं लब्धं किल । किमर्थं गृहं नीत्वा उपयोगः न कृतः ?

**रेवती** - श्रीमन्, 'अन्येषां धनं न स्वीकरणीयम्' इति अस्माकं गुरुः सर्वदा वदति । अतः एव वयं न स्वीकृतवत्यः ।

**अधिकारी** - बहु समीचीनं कार्यं कृतवत्यौ ।

(कार्यानस्य शब्दः)

**अधिकारी** - आगच्छतु, रङ्गनाथमहोदय । भवतः धनस्यूतः अत्र अस्ति । अतः एव अहं दूरवाणीं कृतवान् ।

**रङ्गनाथः** - (प्रविश्य) बहु धन्यवादाः । श्रीमन् ! अहं मम पुत्र्याः विवाहार्थं शाटिकाः क्रेतुं प्रस्थितवान् । मार्गे धनस्यूतः नष्टः । अस्तु, भवता बहु साहाय्यं कृतम् ।

**अधिकारी** - अहं साहाय्यं न कृतवान् भोः । पश्यतु, एते बालिके तत् आनीय दत्तवत्यौ । एतयोः धन्यवादः वक्तव्यः ।

**रङ्गनाथः** - बहु धन्यवादाः । एवमेव सर्वदा प्रमाणिकतया व्यवहरणीयम् । कृपया एतत् उपायनं स्वीक्रियताम् ।

**रजनी** - मास्तु भोः । वयं भवतः धनं भवते दत्तवत्यः, तावदेव ।

**रङ्गनाथः** - स्वीकरोतु । सङ्कोचः मास्तु । (द्वयोः कृते अपि एकैकां लेखनीं ददाति) भवत्योः गृहं कुत्र अस्ति ? अहं तत्र नयामि । (अधिकारिणं) श्रीमन्, वयं गच्छाम वा ?

**अधिकारी** - अस्तु, शुभं भवतु ।

(पटाक्षेपः)

* * *

# वञ्चकः शृगालः

- श्री श्रीरामविठ्ठलः

पात्राणि -

शृगालः

सिंहः

व्याघ्रः

वृकः

(अरण्यप्रदेशः । एकत्र गजः मृतः अस्ति । एकः शृगालः प्रवेशं करोति ।)

**शृगालः -** अरे ! अत्र एकः गजः मृतः अस्ति । अहो मम भाग्यम् । अहं पूर्वजन्मनि बहु पुण्यं कृतवान् इति मन्ये । अतः एतादृशः महान् गजः एव आहाररूपेण लब्धः । यत्किमपि भवतु, इतःपरं मासपर्यन्तं मम आहारस्य चिन्ता एव नास्ति । मम भाग्यम्, अहो भाग्यम् ।

(गजं परितः नर्तनं करोति ।)

(सिंहगर्जनम्)

अहो ! सिंहः आगच्छन् अस्ति । किं करोमि ? अस्तु, उपायेन सिंहम् इतः निवारयामि ।

**शृगालः -** अये मृगराज ! नमस्काराः, आगच्छतु । अहं भवतः कृते एव एतं मृतं महागजं रक्षन् अस्मि । भवान् कृपया स्वीकरोतु ।

**सिंहः -** गजः कथं मृतः ?

**शृगालः -** अन्यः कोऽपि सिंहः मारितवान् स्यात् ।

**सिंहः -** मूर्ख ! अन्येन मारितं गजं खादितुम् अहं किं निश्शक्तः ? मह्यम् एतत् मास्तु । एतं भवतः कृते एव ददामि । भवान् एव खादतु ।

**शृगालः -** भोः महाराज ! भवान् श्रेष्ठः धीरः सत्पुरुषः । भवादृशानाम् एषः उचितः व्यवहारः । सज्जनाः सर्वदा एवमेव व्यवहारं कुर्वन्ति ।

**सिंहः -** सत्यम्, सत्यम् ...

(सन्तोषेण गच्छति ।)

**शृगालः -** 'भवान् एव समर्थः' इति श्लाघनं कृत्वा अहं सिंहं निष्कासितवान् ।

(व्याघ्रगर्जनम्)

अरे ! व्याघ्रः आगच्छन् अस्ति । किं करोमि ? अस्तु, अन्यम् उपायं करोमि ।

(व्याघ्रः प्रविशति ।)

**शृगालः -** भोः महाव्याघ्र ! नमस्काराः । परन्तु अत्र न तिष्ठतु भवान् ।

**व्याघ्रः -** किमर्थम् ?

**शृगालः -** किञ्चित्कालतः पूर्वम् एकः सिंहः अत्र आगतः आसीत् । सः एतं गजं मारयित्वा तस्य रक्षणार्थं मां नियोज्य स्नानार्थं गतवान् अस्ति । गमनसमये सः माम् उक्तवान् - 'ह्यः एकः व्याघ्रः मम आहारम् उच्छिष्टं कृतवान् । अतः अत्र कोऽपि व्याघ्रः आगच्छति चेत् मां वदतु । अहं तं मारयित्वा मम कोपेपशमनं करोमि' इति ।

**व्याघ्रः -** (भयेन) भोः मित्र ! भवान् सत्पुरुषः । परमदयालुः । कृपया एकम् उपकारं करोतु । अत्र कोऽपि व्याघ्रः न आगतवान् इति सिंहं वदतु ।

(पलायनं करोति ।)

**शृगालः -** कथञ्चित् अहं सिंहं व्याघ्रं च निवारितवान् । परन्तु एका चिन्ता मम । गजस्य चर्म अतीव कठिनम् अस्ति । तस्य विदारणं बहु कष्टकरम् । अतः अन्यद्वारा चर्मविदारणं कारयित्वा मांसः खादनीयः ।

(वृकः प्रविशति ।)

(स्वगतं) अरे, वृकः आगतः । (प्रकटं) भोः वृकमहाशय ! आगच्छतु । किं भोः, कुशलं वा ? बहुकालतः भवतः दर्शनम् एव नास्ति । भवान् अतीव बुभुक्षितः इव दृश्यते । अत्र आगच्छतु । पश्यतु, गजमांसः अस्ति । भवान् किञ्चित् खादतु ।

**वृकः -** गजमांसः ? अरे, गजं कः मारितवान् ?

**शृगालः -** सिंहः ।

**वृकः -** सः इदानीं कुत्र ?

**शृगालः -** सः स्नानार्थं गतवान् अस्ति । तस्य आगमनात् पूर्वम् एव भवान् खादतु ।

**वृकः -** किं भोः, सिंहेन मारितं गजम् अहं खादामि वा ? मास्तु, मास्तु । प्रथमं प्राणाः रक्षणीयाः । अनन्तरं भोजनम् । भवते भवतः मांसाय च नमो नमः ।

**शृगालः -** भोः, भयं मास्तु । सिंहस्य आगमनात् पूर्वम् एव भवान् खादतु । अहं दूरे स्थित्वा सिंहप्रतीक्षणं करोमि । सिंहः आगतः चेत् पूर्वमेव सूचयामि । भवान् शीघ्रं ततः धावतु । अहम् अस्मि किल ? किमर्थं भीतिः ?

**वृकः -** एवं वा ? भोः शृगालमित्र ! भवान् अतीव सज्जनः । अस्तु, अहं किञ्चित् खादामि । सिंहः आगतः चेत् निश्चयेन सूचयतु ।

(चर्मविदारणस्य अभिनयः ।)

**शृगालः -** (आत्मगतम्) ह ... ह ... ह ... वृकं वञ्चितवान् । प्रथमं सः चर्मविदारणं करोतु । अहो, चर्मविदारणं समाप्तम् । इदानीम् उपायं करोमि । (प्रकटं) भोः भोः ! सिंहः आगतवान् ... । शीघ्रं धावतु ... । पलायनं करोतु ... । धावतु ... । धावतु ... । समीपे कुत्रापि न तिष्ठतु ... । धावतु ... ।

(वृकः भीत्या धावति ।)

ह ... ह ... ह ... भीत्या वृकः पलायितः । चर्मविदारणम् अपि कृतम् । इदानीं सर्वं मांसम् अहम् एव खादामि । कथमस्ति मम उपायः ?

(पटाक्षेपः)

* * *

# वृद्धोपदेशः

- श्री गु. गणपय्य होळ्ळः

पात्राणि -

शिवाजी
नीराजी
गृहिणी (वृद्धा)
तानाजी
येसाजी
रामदासः

जय जय श्रीराम
जय जय रघुराम
पतितपावन भक्तजनावन
सीतारमण दीनरक्षक

[मार्गस्य दृश्यम्। शिवाजी, तानाजी, नीराजी, येसाजी - एते संन्यासिवेषधारिणः भजनं कुर्वन्तः प्रविशन्ति।]

**शिवाजी -** नीराजिन्! अस्माकं संन्यासिवेषं यः कोऽपि जानीयाद् वा इति मम सन्देहः।

**नीराजी -** शिवाजिन्, तत्र भयम् एव मास्तु। कोऽपि न जानाति इत्येव मम दृढः विश्वासः।

**शिवाजी -** तर्हि भजनं कुर्वन्तः एव राजमार्गेण गच्छामः। [पुनः भजनम्]

[गृहद्वारे एका वृद्धा गृहिणी।]

**गृहिणी -** (स्वगतम्) एते के भजनं कुर्वन्तः मार्गे गच्छन्ति? संन्यासिनः इव आभान्ति। (दृष्टिं प्रसार्य परीक्षते।) न, न। एषः शिवाजी, सपरिवारः गच्छति। अस्तु, तान् सर्वान् मम गृहाय आह्वयामि। (प्रकाशम्) भोः यतिवराः! कृपया मम गृहम् आगत्य, पावनं कुर्वन्तु।

**तानाजी -** पश्यतु, सा गृहिणी अस्मान् संन्यासिनः इत्येव भावयति। कथम् अस्ति अस्माकं वेषः?

**गृहिणी -** (शिवाजिनम् उद्दिश्य) साधुमहाराजाः, मम गृहम् आगच्छन्तु। केवलं फलानि स्वीकृत्य गच्छन्तु। तेन अहं पवित्रिता भवामि। (एकः अन्यस्य मुखं पश्यति।)

**गृहिणी -** भवन्तः किं चिन्तयन्ति ? अन्तः आगच्छन्तु ।

(सर्वे गृहं प्रविशन्ति ।)

[(नेपथ्ये) ''अम्ब ! मम विलम्बः जातः । स्थालिकां स्थापयित्वा उपविष्टवान् अस्मि । शीघ्रं परिवेषयतु अम्ब !'']

**गृहिणी -** (नेपथ्यम् उद्दिश्य) वत्स ! एषा अहम् आगता । क्षणं प्रतीक्षताम् ! (प्रकाशम्) महाराजाः, अत्र उपविशन्तु । (उपवेशनार्थं मञ्चं प्रदर्शयति ।) मम पुत्रः भोजनार्थम् उपविष्टः अस्ति । तस्मै अन्नादिकं परिवेष्य आगच्छामि । (अन्तः प्रविशति ।)

**येसाजी -** गुरुदेव, अत्र आगच्छतु । सर्वे उपविशाम ।

(सर्वे उपविशन्ति ।)

**नीराजी -** महाराज, अस्माकम् एतत् विडम्बनं कदा समाप्तं भविष्यति ? समर्थरामदासः एकः एव यथार्थः गुरुदेवः । वयं सर्वे कपटसंन्यासिनः । एतेन कपटवेषेण अहम् अतीव खिन्नः अस्मि । एषोऽहं भवतां सर्वेषां शिष्यः, न गुरुः । तानाजिन्, मया उक्तं समीचीनं किल ?

**शिवाजी -** नीराजिन्, गुरुः कः, शिष्यः कः – इति विचारः इदानीं न प्रस्तुतः । अस्माकं कार्यं सुसम्पन्नं भवेत् । तदेव अस्माकं मुख्यं ध्येयम् । रायगढपर्यन्तम् अस्माभिः गन्तव्यम् इति भवन्तः स्मरन्ति खलु ?

(फलानि हस्ते स्वीकृत्य वृद्धा प्रविशति ।)

**गृहिणी -** महाराज, क्षम्यताम् । समयः अतीतः । इमानि फलानि स्वीकरोतु । (क्षणकालानन्तरम्) श्रीमन्, छत्रपतिः शिवाजी बद्धः इति श्रुतम् । किन्तु इदमिदानीं सः बन्धनात् मुक्तः इत्यपि श्रुतवती । एतद्विषये भवन्तः किमपि जानन्ति वा ?

[सर्वे आश्चर्यं प्रकटयन्ति - एषा कथं वार्तां ज्ञातवती इति ।]

**नीराजी -** अम्ब, वयं संन्यासिनः । प्रवाहजलवत् वयं सञ्चरणशीलाः । एकत्रैव न तिष्ठामः । किञ्च वयं राजकार्यं कथं जानीमः ?

**वृद्धा -** अन्यथा मा भावयन्तु । एवमेव भवतः पृष्टवती ।

(किञ्चित्कालं तूष्णीं स्थित्वा)

महाराज, भवतः अनुमतिः अस्ति चेत् मम एकं सन्देहं परिहर्तुम् इच्छामि ।

**नीराजी -** कः सन्देहः ? अवश्यं निवेदयतु ।

**वृद्धा -** एतत् भवतां काषायवस्त्रं किल ? वस्त्रस्य अन्तः खड्गः स्थापितः । खड्गस्य संन्यासिनां च कः सम्बन्धः ? इति सन्देहः । [सर्वे विस्मिताः]

**शिवाजी -** अम्ब, भवत्यां रहस्यगोपनेन किं प्रयोजनम् ? वयं सर्वे शिवाजिसैनिकाः । तस्य शोधनार्थं वयं प्रस्थिताः । अम्ब, भवतीं प्रार्थयामः यत् एषा वार्ता कुत्रापि न प्रकटनीया इति । गोपनीयम् एतत् ।

**वृद्धा -** अस्तु, कुत्रापि न कथयामि ।

[(नेपथ्ये) ''अम्ब, सूपं परिवेषयतु।'']

**वृद्धा -** बालः भोजनं कुर्वन्नस्ति। सूपं परिवेष्य आगच्छामि। (अन्तः गत्वा आगच्छन्ती स्वगतम्) एषः बालः कदलीपर्णे भोजनं कर्तुम् अपि न जानाति। यत् एतस्य भोजनं, शिवाजिनः दुर्गाणां स्वाधीनीकरणं तत् उभयम् अपि समानम्।

**शिवाजी -** (आश्चर्येण) अम्ब! शिवाजिविषये भवती किमर्थम् एवं वदति?

**गृहिणी -** पश्यतु, शिवाजी दुर्गाणि बहूनि आक्रम्य स्वाधीनानि करोति। किन्तु तेषाम् एकसूत्रतां न कल्पयति। अतः अन्नतः यथा सूपः प्रवहन् निःसरति तथा दुर्गाणि अपि शिवाजिहस्ततः च्युतानि भवन्ति। शिवाजी राजतिलकं भवेत्। तदानीम् एव हिन्दुस्थानस्य उन्नतिः।

[नेपथ्ये - ''जय जय रघुवीरसमर्थ'' - इति ध्वनिः]

**सर्वे -** अये! गुरुवराः समर्थरामदासाः आगताः!

[समर्थरामदासः प्रविशति। सर्वे उत्तिष्ठन्ति, नमस्कुर्वन्ति च।]

**रामदासः -** [शिवाजिनम् उद्दिश्य] भवान् शीघ्रम् एव राजतिलकं भविष्यति।

**शिवाजी -** गुरुदेव, अहं तु स्वराज्यकामः कश्चन सैनिकः। मम सिहांसनाशा नास्त्येव। अतः राज्यपदारोहणे मयि योग्यता नास्ति।

**रामदासः** - शिव, सिंहासने उपवेष्टुं भवान् न योग्यः वा ? एवं तर्हि विदेशीयाः यवनाः किं योग्याः ? अथवा यवनपद-सेवकाः, राष्ट्रद्रोहकाः अस्मदीयाः योग्याः वा ? विचारयतु। भवान् स्वराज्यस्य संस्थापकः भवतु। एषा अम्बा यत् उक्तवती तत् सत्यम् एव। भवान् राजतिलकं धारयतु। तत् अवश्यं भवेत् एव।

(सर्वे स्तब्धाः तिष्ठन्ति। समर्थः गच्छति। न कोऽपि लक्षयति।)

**शिवाजी** - अरे, समर्थाः गताः वा ?

**गृहिणी** - क्षम्यतां महाराज ! अहं भवन्तम् अज्ञात्वा ...

**शिवाजी** - तथा न मन्तव्यम्। समर्थाः इव भवती अपि मम गुरुः। भवत्याः निरीक्षां सफलां करोमि। स्वराज्यस्य, स्वधर्मस्य च रक्षणाय अहं राज्याभिषेकं साधयामि। वयम् आगच्छामः।

(सर्वे वृद्धायाः पादम् अभिवन्द्य गच्छन्ति।)

(''जयतात् भारतकुलतिलकः शिवमहाराजः'' इति घोषणं कुर्वन्ति।)

(पटाक्षेपः)

* * *

# सङ्घे शक्तिः

- श्री विश्वासः

**पात्राणि -**

व्याधः

व्याधा

काकः

चित्रग्रीवः (कपोतः)

वृद्धकपोतः

हिरण्यकः (मूषकः)

अन्ये केचन कपोताः च ।

(अरण्यप्रदेशः । प्रातःकालः । व्याघ्रः व्याघ्रा च प्रविशतः ।)

**व्याघ्रा -** किं भोः ! अद्य खादितुं किमपि आनयति वा न वा ?

**व्याघ्रः -** तदर्थम् एव गच्छामि भोः इदानीम् ।

**व्याघ्रा -** सर्वदा 'गच्छामि, गच्छामि' इति भवान् वदति । किन्तु गच्छति चेदपि किमपि न आनयति ।

**व्याघ्रः -** प्राणी, पक्षी वा न प्राप्यते चेत् अहं कथम् आनयामि ?

**व्याघ्रा -** किमर्थं न प्राप्यते ? 'ग्रहीतुं न जानामि' इति वदतु ।

**व्याघ्रः -** पक्षिणं ग्रहीतुं कियत् कष्टं अस्ति इति भवती किं जानाति ?

**व्याघ्रा -** सर्वं जानामि । भवान् अलसः । अतः एव भवता किमपि न प्राप्यते ।

**व्याघ्रः -** किं भोः? माम् अलसः इति वदति वा भवती ? भवती मूर्खा !

**व्याघ्रा -** भवान् वराकः ।

**व्याघ्रः -** अरे दुष्टे ! माम् एव तर्जयति वा ? ताडयामि ।

**व्याघ्रा -** ताडयतु, पश्यामि ।

(व्याघ्रः ताडयति । व्याघ्रा रोदनं करोति ।)

**व्याघ्रा -** दिनद्वयात् खादितुं किमपि नास्ति । एकं कपोतम् अपि आनेतुं भवान् न शक्नोति । पुनः मां ताडयति ।

**व्याधः -** भोः, रोदनं न करोतु। अद्य मिलित्वा एव गत्वा बहून् पक्षिणः गृह्णीमः।

**व्याधा -** अस्तु, गच्छाम। जालं स्वीकृतवान् वा भवान् ?

**व्याधः -** आम्। भवती तण्डुलं स्वीकरोतु।

**व्याधा -** अस्तु, स्वीकरोमि। गच्छाम।

**व्याधः -** गच्छाम।

- २ -

(काकः प्रविशति)

**काकः -** अद्य आहारः एव न लब्धः। किं करोमि ? अस्तु, अग्रे गत्वा किमपि प्राप्यते वा इति पश्यामि।

(रङ्गे वृत्ताकारं चलति।)

अरे, एकः व्याधः इतः एव आगच्छन् अस्ति। तस्य हस्ते जालम् अपि अस्ति। हा ! अद्य मम मित्राणां मरणमेव भविष्यति। किं करोमि ? (चिन्तयति) अस्तु, अहमेव मित्राणि सूचयामि। (अग्रे गत्वा) भोः, भोः, मित्राणि ! एकः व्याधः जालं स्वीकृत्य इतः एव आगच्छति। सः अत्रैव जालं प्रसारयेत्। कोऽपि बहिः न आगच्छतु।

अहो, व्याधः आगतवान् एव ! अहमपि गच्छामि।

(निर्गमनम्)

(व्याधः व्याधा च प्रविशतः।)

**व्याधः -** पश्यतु, अत्र एकः महावृक्षः अस्ति। बहवः पक्षिणः अपि सन्ति अत्र। अत्रैव जालं प्रसारयाम।

(जालं प्रसारयति।)

**व्याधा -** तण्डुलं स्वीकरोतु, स्थापयतु। (व्याधः तथा करोति।)

**व्याधः -** आगच्छतु, दूरे स्थित्वा पश्याम।

(निर्गमनम्)

(कपोतराजः सपरिवारः प्रविशति।)

**चित्रग्रीवः** - अत्र खादितुं किमपि लभ्यते वा इति पश्याम।

(आहारान्वेषणं कुर्वन्ति।)

**कपोतः - १** -भोः महाराज ! तत्र तण्डुलः दृश्यते।

**क. २, ३, ४** - आम्, तण्डुलः ! तण्डुलः !!

**वृद्धः -** नैव ! अरण्यमध्ये तण्डुलः नैव भवति। एतत् येन केनापि व्याधेन स्थापितं स्यात्।

**क. १ -** सर्वदा अस्य अपस्वरः अस्ति एव।

**क. २ -** अरण्यमध्ये तण्डुलः न भवेत् इति कः नियमः ?

**क. ३ -** मम बहु बुभुक्षा अस्ति।

**क. ४ -** गच्छाम गच्छाम। तण्डुलान् खादाम।

**वृद्धः -** महाराज ! अरण्ये कदाऽपि तण्डुलः न भवति। अत्र अस्ति इत्युक्ते किमपि कारणं स्यात्। अतः अस्माभिः तत्र न गन्तव्यम्।

**चित्रग्रीवः** - तदपि सत्यम् ... ।

**क. १ -** बहुदिनानन्तरं आहारः दृश्यते ।

**क. २ -** एतत् त्यक्तुं वयं मूर्खाः वा ?

**क. ३, ४ -** न त्यक्तव्यम् । गच्छाम, खादाम ।

**वृद्धः -** मास्तु बालाः, मा गच्छन्तु । (गमनं निवारयति ।)

**क. २ -** वराक ! अपसरतु । नो चेत् भवन्तं ताडयामः । आगच्छन्तु, सर्वे आगच्छन्तु । (सर्वे अग्रे गच्छन्ति ।)

**काकः -** (प्रविश्य) भोः, भोः, तत्र मा गच्छन्तु । तत्र एकः व्याधः जालं प्रसारितवान् अस्ति ।

**क. ४ -** गच्छतु, गच्छतु । बहुदिनानन्तरम् अन्नं लब्धम् । मध्ये भवान् अपि ... ।

(सर्वे गच्छन्ति । बद्धाः भवन्ति ।)

**क. १ -** हा ! मम पादः बद्धः अस्ति ।

**क. २ -** सत्यम् । मम पादः अपि बद्धः ।

**क. ३ -** हा ! ममापि । किं करोमि ?

**क. ४ -** उड्डयनं कर्तुं न शक्यते ।

**क. १ -** कथं गच्छाम ? कथं गच्छाम ?

**क. २ -** हा ! अहं मृतः भवामि ।

**चित्रग्रीवः** - तिष्ठतु भोः । (वृद्धं प्रति) भोः, भवता यदुक्तं तत् सत्यम् अभवत् । इदानीं किं कुर्मः ?

**वृद्धः -** एकम् उपायं कुर्मः ।

**चित्रग्रीवः -** कथम् ?

**वृद्धः -** 'सङ्घे शक्तिः' इति प्रसिद्धम् अस्ति किल । वयं सङ्घटिताः भूत्वा प्रयत्नं कुर्मः चेत् फलं प्राप्यते ।

**चित्रग्रीवः -** किं कुर्मः तर्हि ?

**वृद्धः -** वयं सर्वे मिलित्वा एकदा एव उड्डयनं करवाम । तथा चेत् वयं जीवितुं शक्नुमः ।

**चित्रग्रीवः -** अस्तु, तथैव कुर्मः । भोः, सर्वे मिलित्वा एव उड्डयनं कुर्मः । सर्वे सिद्धाः वा ?

**सर्वे -** सिद्धाः ।

**चित्रग्रीवः -** समीचीनम् !

(सर्वे निश्चलतया [Still] तिष्ठन्ति ।)

**व्याधः -** पश्यतु, भोः पश्यतु । जाले बहुवः कपोताः पतिताः सन्ति ।

**व्याधा -** सत्यं सत्यम् । अद्य समीचीनं पाकं कृत्वा भोजनं कुर्मः ।

**व्याधः -** आगच्छतु । शीघ्रं गत्वा तान् गृह्णीमः ।

**व्याधा -** गच्छाम, गच्छाम ।

(निश्चलतया तिष्ठतः ।)

**चित्रग्रीवः -** व्याधः समीपम् आगतवान् । शीघ्रं गच्छाम । एकं ! द्वे !! त्रीणि !!!

(मिलित्वा डयनं कुर्वन्ति । कोणे निश्चलं तिष्ठन्ति ।)

**व्याधः -** अहो, आश्चर्यम् ! जालेन बद्धाः सर्वे पक्षिणः जालेन सह एव उड्डयनं कृतवन्तः ।

**व्याधा -** हा ! किं कुर्मः इदानीम् ?

**व्याधः -** ते पक्षिणः बहुदूरं गन्तुं न शक्नुवन्ति । शीघ्रमेव पतन्ति । तदा ग्रहीतुं शक्यते । अतः अनुसृत्य गच्छाम ।

(कपोतानां पृष्ठतः व्याधः, व्याधा च । रङ्गे द्विवारं भ्रमणं कुर्वन्ति । कपोताः गच्छन्ति ।)

**व्याधः -** हा ! पक्षिणः दूरं गतवन्तः ।

**व्याधा -** हा ! अस्माकम् एकमात्रं जीवनाधारः जालम् अपि गतं किल !

**व्याधः -** हा ! एकमेव जालम् आसीत् । तदपि गतम् । सर्वं गतम् ।

(रोदनं करोति ।)

**व्याधा -** तर्हि अद्यापि भोजनं नास्ति । (रोदनं करोति ।)

**व्याधः -** भोजनमपि नास्ति, किमपि नास्ति । गृहं गच्छाम ।

(रोदनं कुर्वन्तौ गच्छतः ।)

– ३ –

(कपोताः प्रविशन्ति ।)

**चित्रग्रीवः -** बहुदूरम् आगतवन्तः । इतः परं व्याधात् भीतिः नास्ति ।

**क. १ -** किन्तु जालबन्धनतः विमोचनं कथम् ?

**चित्रग्रीवः -** चिन्ता मास्तु । तत्र एकः गिरिः दृश्यते किल ! तत्र कोटरे मम मित्रं मूषिकः अस्ति । सः अस्मान् बन्धनतः विमोचयति ।

(रङ्गे वृत्ताकारेण भ्रमणं कुर्वन्ति ।)

**चित्रग्रीवः -** भोः मित्र, बहिः आगच्छतु ।

**हिरण्यकः -** (अन्तः) कः भवान् ?

**चित्रग्रीवः -** मित्र हिरण्यक ! अहं भवतः प्रियमित्रं चित्रग्रीवः ! बहिः आगच्छतु ।

**हिरण्यकः -** (प्रविश्य) किमेतत् ? भवान् सपरिवारः अत्र किमर्थम् आगतवान् ? किम् अभवत् ?

**चित्रग्रीवः -** दृष्ट्वा अपि पृच्छति वा भवान् ? जालेन बद्धाः वयम् । शीघ्रम् अस्माकं बन्धविमोचनं करोतु कृपया ।

**हिरण्यकः -** तथैव अस्तु मित्र !

(चित्रग्रीवस्य समीपं गच्छति ।)

**चित्रग्रीवः -** प्रथमम् एतान् विमोचयतु । अन्ते मां विमोचयतु ।

**हिरण्यकः -** किमर्थम् ? भवान् एतेषां राजा किल ! अतः प्रथमं भवतः एव विमोचनं करणीयम् ।

**चित्रग्रीवः -** तथा न मित्र ! एते सर्वे मयि विश्वस्य गृहं परित्यज्य एतावद्दूरम् आगतवन्तः । एतेषां रक्षणं प्रथमं करणीयम् !

**हिरण्यकः** - क्षम्यतां मित्र ! अस्तु । भवान् यथा वदति तथैव करोमि ।

(सर्वान् विमोचयति ।)

**चित्रग्रीवः** - मित्र, हिरण्यक ! भवान् बहु उपकारं कृतवान् । धन्यवादाः ।

**हिरण्यकः** - स्वागतम् ।

**वृद्धः** - सङ्घटनेन एव अद्य वयं सर्वे रक्षिताः । अतः एव ज्येष्ठाः वदन्ति - 'सङ्घे शक्तिः अस्ति' इति ।

**सर्वे** - सत्यं, सत्यम् ।

**चित्रग्रीवः** - सङ्घटने !!!

**सर्वे** - शक्तिरस्ति ।

* * *

# सत्यकामजाबालः

- श्री विश्वासः

पात्राणि -

गौतमः

सत्यकामः

जबाला

शिष्याः केचन च ।

(महर्षेः गौतमहारिद्रुमतस्य आश्रमः । गौतमं परितः वटवः उपविष्टाः सन्ति । मन्त्रपारायणं प्रचलति । गुरुः एकवारं वदति । वटवः अनुवदन्ति ।)

**गौतमः** - श्रीगुरुभ्यो नमः । हरिः ओम् ।

**वटवः** - श्रीगुरुभ्यो नमः । हरिः ओम् ।

**गौतमः** - योऽपां पुष्पं वेद ।

**वटवः** - योऽपां पुष्पं वेद ।

**गौतमः** - पुष्पवान् प्रजावान् पशुमान् भवति ।

**वटवः** - पुष्पवान् प्रजावान् पशुमान् भवति ।

(एवमेव अग्रे)

चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान्
भवति । य एवं वेद । योऽपामायतनं वेद ।
आयतनवान् भवति । ॐ शान्तिः शान्तिः शान्तिः ।

(छात्राः एकैकशः गत्वा गोत्राभिवादनं कुर्वन्ति ।)

**वटुः-१** - काश्यपगोत्र-आश्वलायनसूत्र-ऋक्शाखाध्यायी प्रवरसेनवर्माहं भो अभिवादये ।

**गौतमः** - आयुष्मान् भव ।

**वटुः-२ -** विश्वामित्रगोत्र-यजुःशाखाध्यायी शङ्करशर्माहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव ।

**वटुः-३ -** देवदत्तशर्माहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव ।

**वटुः-४ -** भार्गवशर्माहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव ।

**वटुः-५ -** विष्णुगुप्तोऽहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव ।

**वटुः-६ -** यज्ञदत्तशर्माहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव ।

**वटुः-७ -** वसुपालदासोऽहं भो अभिवादये ।

**गौतमः -** आयुष्मान् भव । (दूरे स्थितं सत्यकामं दृष्ट्वा) (स्वगतम्) कोऽयं तेजस्वी वटुः ? अस्माकं गुरुकुलस्य वटुः इव न दृश्यते । कः स्यात् ?

**सत्यकामः -** भगवन्, अभिवादये ।

**गौतमः -** इष्टार्थसिद्धिरस्तु । वत्स, को भवान् ? किमर्थम् आगतः ?

**सत्यकामः -** भवगन्, मम नाम सत्यकामः ।

**गौतमः -** (स्वगतम्) सत्यकामः ! उचितं नामधेयम् । (प्रकाशम्) वदतु वत्स । किमर्थम् आगतवान् भवान् ?

**सत्यकामः** - भगवन्, अहम् अध्ययनार्थम् आगतवान् । भवतः आश्रमे स्थित्वा ब्रह्मचर्यं कर्तुमिच्छामि ।

**गौतमः** - किम् ? अस्माकम् आश्रमे स्थित्वा ब्रह्मचर्यं कर्तुम् इच्छति भवान् ? साधु, साधु । आ ..., वत्स ! भवतः गोत्रं किम् ?

**सत्यकामः** - मम गोत्रं वा ? भगवन्, अहं न जानामि ।

**गौतमः** - भवान् स्वकीयं गोत्रं न जानाति ? वत्स, भवान् न जानीयात् । परन्तु भवतः पिता जानीयात् एव । तं पृच्छतु । भवतः पिता कः ?

**सत्यकामः** - (चिन्तयन् – स्वगतम्) पिता ... मम पिता ... ? (प्रकाशम्) भगवन्, मम पिता कः इति अहं न जानामि । तम् अहं कदापि न दृष्टवान् ।

**गौतमः** - पितरम् अपि न जानाति भवान् ? अस्तु सौम्य, **भवतः माता अस्ति वा ?**

**सत्यकामः** - आं, भगवन् । मम माता अस्ति ।

**गौतमः** - तर्हि समस्या परिहृता । सा एतं विषयं जानीयात् एव । भवान् मातरं पृष्ट्वा, 'स्वगोत्रं किं, पिता कः' इति ज्ञात्वा आगच्छतु । अनन्तरं भवतः विद्याभ्यासस्य व्यवस्थां करिष्यामि ।

**सत्यकामः** - तथैव अस्तु भगवन् ।

(सत्यकामः निर्गच्छति । गौतमः अपि उत्थाय कुटीरं प्रति गच्छति ।)

**शिष्यः-१** - देवदत्त, तस्य वचनं भवान् श्रुतवान् वा ?

**शिष्यः-२ -** आम्, श्रुतवान् ।

**शिष्यः-१ -** स्वगोत्रं किम् इत्येव सः न जानाति ।

**शिष्यः-३ -** गोत्रं न जानाति चेत् चिन्ता नास्ति । पिता कः इत्येव सः न जानाति ।

(सर्वे हसन्ति ।)

**शिष्यः-४ -** किमर्थं भवन्तः हसन्ति ? तस्य पिता तस्य जननात् पूर्वम् एव दिवङ्गतः स्यात् । अतः सः न जानाति । तत्र कः विशेषः ?

**शिष्यः-३ -** तथापि पितुः नाम अपि सः न जानाति । (साकूतम्) अतः अन्यत् किमपि अस्ति । (उच्चैः हसन्ति ।)

**शिष्यः-४ -** (अङ्गुलीं मुखस्य उपरि स्थापयित्वा) श् ... ! अन्येषां विषये अन्यथा न चिन्तनीयम् । उपहासः न करणीयः । उपहासकरणं श्रुतं चेत् कुलपतयः कुपिताः भवन्ति ।

**शिष्यः-१ -** सत्यं भोः, अन्येषां विषये चिन्तनं किमर्थम् ? वयम् अस्माकम् अभ्यासं कुर्मः ।

**शिष्यः-५ -** आगच्छन्तु सर्वे । अभ्यासं कुर्मः । अहम् एकवारं वदामि । भवन्तः द्विवारं वदन्तु ।

(पञ्चमः शिष्यः पूर्वनिर्दिष्टम् एव मन्त्रं (योऽपां पुष्पं वेद ...) वदति । अन्ये सर्वे अनुकथयन्ति ।)

(जबाला कूपात् जलम् उद्धरन्ती अस्ति । सत्यकामः प्रविशति ।)

**सत्यकामः** - अम्ब !

**जबाला** - अये सत्यकाम ! कथम् एतावत् शीघ्रं भवान् प्रत्यागतवान् ? कुलपतयः भवन्तं न अङ्गीकृतवन्तः वा ?

**सत्यकामः** - ते तु अङ्गीकरिष्यन्ति एव । ...

**जबाला** - तर्हि किमर्थं भवान् प्रत्यगतवान् ? गुरुकुलवासः कठिनः इति चिन्तयित्वा भवान् पलायनं कृतवान् वा ?

**सत्यकामः** - नैव अम्ब । कुलपतयः माम् एकं प्रश्नं पृष्टवन्तः । अहं तस्य उत्तरं न ज्ञातवान् ।

**जबाला** - कः प्रश्नः वत्स ?

**सत्यकामः** - 'भवतः गोत्रं किम्' - इति ते पृष्टवन्तः । 'अहं न जानामि' इति अहम् उक्तवान् । 'तर्हि मातरं पृष्ट्वा आगच्छतु' इति ते उक्तवन्तः । अतः अहं प्रत्यागतवान् अम्ब । इदानीं भवती वदतु - मम गोत्रं किम् ? पिता कः ?

**जबाला** - (स्वगतम् । चिन्तामिश्रितस्वरेण) गोत्रं किम् ? पिता कः ... गोत्रं किम् ? पिता कः ? ...

(नेत्राभ्याम् अश्रूणि निर्गच्छन्ति ।)

**सत्यकामः** - किम् अभवत् अम्ब ? किमर्थं तथा स्थितवती भवती ?

**जबाला** - किमपि न अभवत् । किमपि न ... । (अश्रूणि मार्जयित्वा स्वगतम्) परन्तु ... परन्तु ... । किं वदामि ? कथं वदामि ?

**सत्यकामः** - किमर्थं तावती चिन्ता अम्ब ? मम प्रश्नस्य उत्तरं किमर्थं न वदति भवती ?

**जबाला** - वदामि वत्स । वदामि । भवान् कुलपतीनां प्रश्नस्य उत्तरं किमर्थं न उक्तवान् ?

**सत्यकामः** - अहं न ज्ञातवान् । अतः न उक्तवान् ।

**जबाला** - एतत् अपि तथैव वत्स ।

**सत्यकामः** - तन्नाम ... ? मम पिता कः इति भवती अपि न जानाति ?

**जबाला** - सत्यं वत्स । अहं न जानामि ।

**सत्यकामः** - तर्हि मम जन्म कथम् अभवत् ? वदतु अम्ब ।

**जबाला** - वदामि वत्स । अहं पूर्वं कस्यचित् महर्षेः आश्रमे वासं कृतवती । तदा अहं तत्र आगतानाम् अतिथीनाम् अनुचर्यां कुर्वती आसम् । कदाचित् कश्चन तेजस्वी महर्षिः तत्र आगतः । तस्य संसर्गवशात् भवतः जन्म अभवत् ।

**सत्यकामः** - सः महात्मा कः इति भवती न पृष्टवती वा ?

**जबाला -** नैव ।

**सत्यकामः** - तर्हि इदानीं कुलपतीन् किम् इति वदामि ?

**जबाला -** तद् अहं न जानामि । अहम् एतावदेव जानामि । अहं जबाला, भवान् मम पुत्रः । जबालायाः पुत्रः जाबालः । अतः भवान् जाबालः । सत्यकामजाबालः ।

**सत्यकामः** - जबालायाः पुत्रः जाबालः । अस्तु अम्ब, अहं कुलपतीन् तथैव वदामि ।

**जबाला -** तथैव भवतु । कुलपतीन् सत्यमेव वदतु । तदेव सत्यं भवन्तं मां च रक्षतु । गच्छतु, कुलपतीनाम् अनुग्रहं सम्पाद्य आगच्छतु ।

**सत्यकामः** - आगच्छामि अम्ब । (निर्गच्छति ।)

- ३ -

(महर्षिः गौतमः वृक्षमूले उपविश्य ग्रन्थपरिशीलनं कुर्वन् अस्ति ।)

**सत्यकामः** - भगवन्, अहम् आगतः अस्मि ।

**गौतमः -** अहो सत्यकामः । आगच्छतु वत्स । कियत् शीघ्रं प्रत्यागतवान् भवान् ! वत्स, मम प्रश्नस्य उत्तरं भवान् प्राप्तवान् वा ? भवतः माता किम् उक्तवती ?

**सत्यकामः** - भगवन् ! मम माता उक्तवती - सा पूर्वं कस्यचित् महर्षेः आश्रमे परिचर्यां कुर्वती आसीत् । तदा तत्र आगतस्य कस्यचित् महात्मनः संसर्गवशात् मम

जन्म अभवत् इति। 'सः महात्मा कः' इति मम माता अपि न जानाति।

**गौतमः -** तर्हि भवन्तं किम् इति आह्वयामि वत्स ?

**सत्यकामः -** अहं जबालायाः पुत्रः जाबालः। सत्यकामजाबालः। तथैव आह्वयतु भगवन्।

**गौतमः -** (स्वगतम्) सत्यकामजाबालः। (सत्यकामम् उद्दिश्य) सत्यकाम, तर्हि भवान् गोत्रम् अपि न जानाति। पितरमपि न जानाति।

**सत्यकामः -** सत्यं भगवन्, अहं न जानामि।

**गौतमः -** (स्वगतम्) एवं चेत् अज्ञातकुलगोत्रः एषः कथं वेदाध्ययनस्य अधिकारी भवितुम् अर्हति ?

**सत्यकामः -** किं भगवन्, किं चिन्तयन्तः सन्ति भवन्तः ? मम अध्ययनार्थम् अवकाशं कल्पयन्ति किल भवन्तः ?

**गौतमः -** तदेव चिन्तयन् अस्मि वत्स। (स्वगतम्) अद्यपर्यन्तं कोऽपि ईदृशः अज्ञातकुलगोत्रः मया न पाठितः। अस्माकं पूर्वजैः अपि न पाठितं स्यात्। अतः किं करोमि इदानीम् ?

**सत्यकामः -** भगवन्, अध्ययने मम महती आसक्तिः अस्ति। मम अवकाशं कल्पयन्तु। अहं श्रद्धया अभ्यासं करोमि।

**गौतमः -** (स्वगतम्) एतस्य श्रद्धां पश्यामः चेत् निराकर्तुम् इच्छा न भवति। अथवा कस्याश्चित् अपि विद्यायाः अध्ययनार्थम् अधिकारः श्रद्धया भवति, न तु जन्मना। ब्रह्मविद्यायाः अपि तथैव खलु ? यत्किमपि

भवतु । एतं मम शिष्यत्वेन अङ्गीकरोमि । (प्रकटम्) सत्यकाम ! यद्यपि भवान् स्वगोत्रं न जानाति, पितरम् अपि न जानाति, तथापि तम् अंशं गूहितुं यत्नम् अकृत्वा भवान् सत्यमेव उक्तवान् किल ? भवान् वस्तुतः सत्यकामः । सत्यकामः इति भवतः अन्वर्थं नाम । स्वगोत्रं पितरं च अजानन् अपि भवान् स्वसत्यनिष्ठया ब्रह्मचर्यस्य अधिकारी सञ्जातः । वयं भवते ब्रह्मचर्यदीक्षां दास्यामः । उपनयनं कारयिष्यामः ।

**सत्यकामः** - भगवन् ! अहम् अनुगृहीतः ।

**गौतमः** - उत्तिष्ठतु वत्स, समित्पाणिः माम् अनुसरतु ।

– ४ –

[**निरूपकः** - एवमुक्त्वा कुलपतिः गौतमः सत्यकामं शिष्यवेन अङ्गीकृतवान् । तस्य ब्रह्मोपदेशं कारितवान् । अनन्तरं तस्मै दुर्बलाः ४०० धेनूः दत्त्वा उक्तवान् - ''सत्यकाम, एताः अनुसरतु'' इति । सत्यकामः ताभिः धेनुभिः सह अरण्यं गतवान् । अरण्ये श्रद्धया धेनूनां सेवां कृतवान् । तस्य सेवया धेनवः सर्वाः अपि पुष्टाः जाताः । तेनैव सह स्वर्गे देवाः अपि सन्तुष्टाः । ते देवाः आगत्य सत्यकामं ब्रह्मज्ञानम् उपदिष्टवन्तः । साक्षात् देवानां मुखात् एव सत्यकामः ब्रह्मज्ञानं प्राप्तवान् । एवं सः ब्रह्मज्ञानी सञ्जातः । सः एकस्मिन् दिने धेनुभिः सह आश्रमं प्रत्यागतवान् ।]

(सर्वे छात्राः समूहरूपेण वेदमन्त्रं पठन्ति ।)

योऽपां पुष्पं वेद । ...

पुष्पवान् प्रजावान् पशुमान् भवति । ...

(सत्यकामः प्रविशति ।)

**शिष्यः-१ -** (दृष्ट्वा) सत्यकामः आगतवान् ।

**सर्वे -** सत्यकामः आगतवान् । सत्यकामः आगतवान् ।

**गौतमः -** (प्रविश्य) अरे, कः कोलाहलः ? (सत्यकामं दृष्ट्वा) अहो, सत्यकामः आगतवान् ।

**सत्यकामः -** भगवन्, अभिवादये । (नमस्करोति ।)

**गौतमः -** चिरं जीवतु वत्स ।

**सत्यकामः -** भवद्भिः दत्ताः धेनवः इदानीं सहस्रसंख्याकाः सञ्जाताः सन्ति । कृपया ताः स्वीकुर्वन्तु ।

**गौतमः -** वत्स, कथं एतां सिद्धिं भवान् प्राप्तवान् ?

**सत्यकामः -** भगवन्, भवतः अनुग्रहवशात् सर्वं सम्पन्नम् । अरण्ये देवाः मम साहाय्यं कृतवन्तः । अतः एतत् सर्वं सिद्धम् ।

**गौतमः -** साधु वत्स, साधु । तद्भवतु, सत्यकाम, भवान् इदानीं ब्रह्मज्ञानी इव भासते । भवतः मुखं ब्रह्मविदः मुखम् इव शोभते । कः भवन्तं ब्रह्मज्ञानम् उपदिष्टवान् ?

**सत्यकामः -** भगवन्, भवतः आशीर्वादेन एतत् सर्वं सिद्धम् । अरण्ये वायुदेवः, अग्निदेवः, आदित्यः, प्राणदेवः च मां ब्रह्मज्ञानम् उपदिष्टवन्तः ।

**गौतमः -** (सश्लाघम्) देवानां मुखात् एव ब्रह्मज्ञानं प्राप्तवतः भवतः सौभाग्यम् असदृशम् ।

**सत्यकामः -** किन्तु भगवन्, अहं पुनः भवतः सकाशात् एव ब्रह्मज्ञानं प्राप्तुम् इच्छामि ।

**गौतमः -** तदपि अस्तु वत्स । भवतः उपदेशसौभाग्यं मम अपि भवतु ।

(जबाला मन्दगत्या प्रविशति ।)

**शिष्यः -** भगवन्, काचित् माता आगता अस्ति ।

**गौतमः -** का सा ? ताम् आनयतु ।

(जबाला गौतमसमीपम् आगच्छति ।)

आगच्छतु अम्ब ।

**जबाला -** सत्यकाम ...

**सत्यकामः -** (मातरं दृष्ट्वा आश्चर्येण) अम्ब ! (अग्रे गत्वा मातरं प्रणमति ।)

**जबाला -** (सत्यकामम् आलिङ्ग्य) आगतवान् वा वत्स !

**गौतमः -** सत्यकामं पुत्रत्वेन प्राप्तवती भाग्यवती भवती एव वा ?

**जबाला -** आं महात्मन् । अज्ञातकुलगोत्रस्य एतस्य, मन्दभाग्या माता अहमेव ।

**गौतमः -** तथा न वदतु पूज्ये ! ब्रह्मज्ञानिनः माता कदापि मन्दभाग्या न भवति, अपि तु परमसौभाग्यवती

एव । ''ब्रह्मज्ञानस्य अधिकारः जन्मना न भवति, अपि तु संस्कारेण तपसा च '' इत्यत्र भवत्याः पुत्रः एव प्रमाणम् । एषः भवत्याः पुत्रः प्रख्यातः महर्षिः भविष्यति ।

**सत्यकामः**
**जबाला च** - भगवन्, वयम् अनुगृहीताः ।

(पटाक्षेपः)

* * *

# सङ्कल्पदृढता

**- श्री जनार्दन हेगडे**

**पात्राणि -**

पथिकः

मधुराधिदेवता

इन्द्रः

कल्पवृक्षाधिदेवता

(अरण्यप्रदेशः । कश्चन सात्त्विकः पुरुषः गच्छन् अस्ति । तस्य स्कन्धे दण्डः । पृष्ठतः दण्डस्य अन्ते वस्त्राणां बन्धः । दूरप्रयाणेन श्रान्तः सः उत्तरीयेण स्वेदं मार्जयति ।)

**पथिकः -** अहो उष्णता ! असह्यः खलु चण्डातपः । क्षामपीडिता भूमिः इयम् । कीदृशी दुरवस्था मम ! तीर्थक्षेत्राणि अटन् अहं ह्यः सूर्यास्तसमये मार्गभ्रष्टः अभवम् । अग्रे गच्छन् मरुभूमिं प्रविष्टवान् । आरात्रि अटन् कथञ्चित् मरुभूमिम् अतिक्रम्य अत्र आगतवान् अस्मि । अत्रापि किं पश्यामि ? सर्वत्र क्षामः । शुष्काः वृक्षाः ! शुष्काः नद्यः । न प्राणिनां कोलाहलः, न पक्षिणां कलरवः । अहो, बलवती पिपासा बाधते माम् । जलार्थं कुत्र गच्छामि ? कां दिशम् अनुसरामि ?

(उपविशति । क्षणकालानन्तरम् उत्कर्णं शृण्वन् उत्थाय)

पक्षिणां कलरवः इव श्रूयते ... । दूरे ... आम्, अस्यां दिशि एव ।

(निष्क्रामति । अन्यदिक्तः पुनः प्रविश्य)

अहो ! हरितायमानः प्रदेशः । परितः शुष्कता, अत्र तु हरित्समृद्धिः । केनचित् मुनिना अत्र तपः कृतं स्यात् । अथवा ... कस्याश्चित् देवतायाः वासभूमिः स्यात् वा ? अत्र समीपे जलं भवेत् एव । अस्तु तावत्, क्षणं विश्रम्य जलान्वेषणं करिष्यामि । (वृक्षमूले उपविशति) यदि अत्रैव जलं प्राप्तं स्यात् ... ।

(मधुराधिदेवता प्रत्यक्षा भवति । तस्याः वस्त्रेषु तत्र तत्र शष्कुली-लड्डुक-मोदकादयः उत्तोलिताः सन्ति । हस्ते च मधुरभक्ष्याणां पात्रम् ।)

**म. देवता -** (स्वगतम्) अहम् अस्मि मधुराधिदेवता । ज्ञातुम् इच्छामि एतस्य सात्त्विकताम् । (तस्य समीपं गत्वा) वत्स ! उत्तिष्ठतु । उत्तिष्ठतु वत्स !

**पथिकः -** (स्वगतम्) अये ! काऽपि तेजस्विनी ! (प्रकटम्) आर्ये, क्षन्तव्यः अयं जनः । श्रान्तिवशात् निमीलितनेत्रः आसम् ।

**म. देवता -** चिन्ता मास्तु वत्स । उत्तिष्ठतु । (पथिकः उत्तिष्ठति) एतानि मधुरभक्ष्याणि स्वीकरोतु ।

**पथिकः -** मधुरभक्ष्याणि ! मह्यं किमर्थम् ?

**म. देवता -** भवदर्थम् एव आनीतानि एतानि । स्वीकरोतु । पिपासितः बुभुक्षितः चापि खलु भवान् ? एतानि खादतु । बुभुक्षां प्रथमं निवारयतु । तदनन्तरं भवान् जलं पातुम् अर्हति ।

**पथिकः -** अहं जलं पातुम् इच्छामि इति तु सत्यमेव । किन्तु भक्ष्याणि मया मनसा अपि न सम्प्रार्थितानि । प्राणधारणार्थं यावत् आवश्यकं तावत् एव स्वीकरोमि अहम् । कदाचित् कन्दमूलानि, कदाचित् भिक्षान्नम् । इतोऽपि अधिका अपेक्षा नास्ति मम ।

**म. देवता -** भवतः व्यवहारेण सन्तुष्टा खलु ददामि ? अयाचितं प्राप्तं चेत् तस्य स्वीकरणे का हानिः ?

**पथिकः -** देवि, केनापि कारणेन अहं व्रतभङ्गं कर्तुं न इच्छामि। यदि भवती दातुम् एव इच्छति तर्हि दीनदरिद्रेभ्यः ददातु। दुःखितबन्धुभ्यः ददातु। एकदा वा तेषां मुखे हासः विलसतु।

**म. देवता -** वत्स ! भवतः निष्ठया अहं सन्तुष्टा अस्मि। चिरं जीवतु भवान्।

(मधुराधिदेवता निर्गच्छति। दीपः मन्दायते। पुनः यदा प्रकाशमानः भवति तदा इन्द्रः पुरतः आगत्य तिष्ठति।)

**इन्द्रः -** (स्वगतम्) देवेन्द्रोऽहम्। देवानाम् अधिपोऽहम्। मम प्रथमपरीक्षायाम् एषः सज्जनः उत्तीर्णः अभवत्। अन्यां परीक्षाम् आयोज्य एतं परीक्षितुम् इच्छामि। पश्यामि तावत् किं भवेत् इति। (प्रकटम्) वत्स ! अये वत्स !

**पथिकः -** प्रभो ! महात्मन् ! एषोऽहम् अभिवादये।

**इन्द्रः -** दीर्घायुष्मान् भवतु। इन्द्रोऽहं ददामि - एतत् अमृतपात्रम्। एतत् पिबतु। तेन भवतः पिपासा किं, पुनर्जन्मप्राप्तिः एव शाश्वतं निवारिता भविष्यति।

**पथिकः -** पिपासितः अहं जलमात्रं कामये, न तु अमृतम्।

**इन्द्रः -** अये ! किम् एवं मूर्खः इव वदति भवान् ? यत् प्राप्तुं महात्मानः अपि न शक्नुवन्ति, यस्य प्राप्त्या ऋषिमुनयः मोक्षं प्राप्नुवन्ति, यच्च प्राप्य देवाः अमराः

संवृत्ताः, तत् अमृतं भवतः पुरतः अस्ति । अतः कीदृशम् अमूल्यं वस्तु भवान् तिरस्कुर्वन् अस्ति इति जानाति खलु ? जन्मनः अन्तिमं लक्ष्यं मोक्षः एतेनैव खलु सिध्द्यति ?

**पथिकः -** निःस्पृहस्य तृणं जगत् । अमृतं चापि अहं तृणाय मन्ये । विना प्रयत्नेन प्राप्तं स्वर्गाधिपत्यं वा कुतः न भवेत्, अहं तत् न इच्छामि एव । किम् अधिकप्रलोभनेन ?

**इन्द्रः -** (कोपेन) भोः, ज्येष्ठानां सन्तोषः कोपश्चापि महान् एव भवति इति भवान् जानाति खलु ?

**पथिकः -** यदि व्रतनिष्ठता अपि भवतः कोपाय भवेत् तर्हि तस्य फलं सोढुम् अहं सिद्धः एव ।

**इन्द्रः -** अनुभवतु तर्हि ।

(इन्द्रः शापं दातुम् उद्युक्तः भवति । तावति काले कल्पवृक्षाधिदेवता प्रत्यक्षा भवति ।)

**क. देवता -** देवेन्द्र ! अलं कोपेन । क्षणकालं तिष्ठतु । उपसंहरतु शापम् । शापेन न सन्तापनीयः अयं सज्जनः । (पथिकम् उद्दिश्य) महात्मन् ! किमर्थं गृहम् आगतां लक्ष्मीं तिरस्करोति भवान् ?

**पथिकः -** देवि ! भवती ... ?

**क. देवता -** अहम् एतस्य प्रदेशस्य अधिष्ठात्री देवता । यस्य आश्रये भवान् स्थितवान् स एषः कल्पवृक्षः । अहम् अस्मिन् वृक्षे निवसामि ।

**पथिकः -** आर्ये, नमस्करोमि। (नमस्कृत्य) परितः क्षामः। मध्ये कुत्रचित् हरितायमानः प्रदेशः। तेनैव अहं ज्ञातवान् यत् एषः कस्याश्चित् देवतायाः वासभूमिः एव स्यात् इति। भवतोः दर्शनेन अहम् आत्मानं धन्यं मन्ये।

**क. देवता -** वत्स, कल्पवृक्षम् आश्रितः यत् इच्छति तत् प्राप्नोति। पिपासितः भवान् जलम् इष्टवान्। तेन अमृतम् एव उपस्थितम् अभवत्। भवतः पुण्यम् इहैव फलितम् इति भावयतु। अपेक्षितं पृच्छतु।

**पथिकः -** लोकहितं मम लक्ष्यम्। एतद्विना न किञ्चित् इच्छामि अहम्।

**क. देवता -** भवदर्थं किमपि पृच्छतु।

**पथिकः -** मदर्थम्! अहं नाम कः ? आत्मस्वरूपी। लोकसेवया एव आत्मनः सार्थक्यम्। एतत् शरीरं तु क्षणविध्वंसि। एतदर्थं किमिति कामये ? भवती यदि केनापि अनुग्रहणीयम् इत्येव इच्छति तर्हि सस्यसमृद्धिं फलसमृद्धिं लोकसम्पत्समृद्धिं च ददातु। एतद् वनं हरिद्वर्णेन सुशोभितं भवतु। पक्षिणां कलरवः अत्र प्रतिध्वनितः भवतु। जनानां मृदुमधुरः हासः सर्वत्र विलसतु।

**क. देवता -** सर्वथा निरपेक्षः दृढसङ्कल्पः च भवान्। भवान् यथा इच्छति तथैव भवतु। एतद् वनं हरितायमानं भविष्यति। भवान् यत्र निवसति तत्र सुभिक्षा सिध्द्यति। यावज्जीवं लोकोपकारकः भवतु भवान्।

**पथिकः -** देवि! देवेन्द्र! भवतोः कृपया अनुगृहीतोऽस्मि।

(पटाक्षेपः)

* * *

# योगक्षेमं वहाम्यहम्

- श्री जनार्दन हेगडे

**पात्राणि -**

रामदासः
नन्दिनी
संन्यासी
कर्मकरः

(निर्धनस्य गृहम् । देवमण्डपः । पुरतः रामदासः काष्ठासने उपविष्टः अस्ति । सः रामपूजायां मग्नः अस्ति । तस्य पुरतः मन्त्रग्रन्थः अस्ति ।)

**रामदासः -** रामाय रामभद्राय
रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय
सीतायाः पतये नमः ॥

वने चरामो वसु चाहरामः
नदीं तरामो न भयं स्मरामः ।
इतीरयन्तोऽपि वने किराताः
मुक्तिं गता रामपदानुषङ्गात् ॥

अनन्याश्चिन्तयन्तो माम्
ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां
योगक्षेमं वहाम्यहम् ॥

(इति गन्धवर्तिकया देवं पूजयित्वा)

नन्दिनि, अये नन्दिनि ! नैवेद्यम् आनयतु । श्रुतवती खलु नन्दिनि ?

**नन्दिनी -** किमिति भवान् तावद्वारम् आह्वयति ? किम् अहं बधिरा ?

**रामदासः -** नैवेद्यम् आनयतु इति वक्तुम् ... ।

**नन्दिनी -** नैवेद्यम् ! कुतः आनयामि ? नैवेद्यार्थं दातुं गृहे किम् अस्ति ?

**रामदासः -** किमर्थं तथा वदति भवती ? यत् अस्ति तत् एव आनयतु ... । यत् भक्त्या समर्प्यते तेनैव भगवान् सन्तुष्टः भवति ।

**नन्दिनी -** हुं, भगवान् सन्तुष्टः भवति । अतः एव खलु दिनद्वयतः अस्मिन् गृहे चुल्ली एव न ज्वालिता ? अतः एव खलु बालाः असह्यया बुभुक्षया पीड्यमानाः सन्ति ?

**रामदासः -** नन्दिनि ! किमर्थं भगवतः निन्दा ? नैवेद्यार्थं किमपि ... ।

**नन्दिनी -** नैवेद्यार्थं दातुम् अस्मिन् गृहे किमपि नास्ति । नास्ति, नास्ति, नास्ति ।

**रामदासः -** (कोपेन) नन्दिनि !

**नन्दिनी -** अथवा एवम् अस्तु । मम प्राणान् एव भवान् नैवेद्यरूपेण समर्पयतु ।

**रामदासः -** नन्दिनि ! शान्तं पापम् । शान्तं पापम् । अमङ्गलं मा वदतु । भवती अद्य उद्विग्ना अस्ति । अस्तु तावत् । ताम्बूलनैवेद्यमात्रेण एव पूजां समापयामि । (स्वगतम्) पुरतः स्थापितं ताम्बूलं निवेदयामि ... । पुरतः स्थापितं ताम्बूलनैवेद्यं विसर्जयामि ।

पत्रं पुष्पं फलं तोयम्
यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतम्
अश्नामि प्रयतात्मनः ॥

(इति उक्त्वा घण्टावादनपूर्वकं नीराजनं समर्पयति । अत्रान्तरे संन्यासी प्रविशति ।)

**संन्यासी** - भवति, भिक्षां देहि।

**रामदासः** - नन्दिनि ! पश्यतु, कोऽपि उपस्थितः इव ... ।

**नन्दिनी** - अहं किं करोमि ? किं ददामि ? यत्र वायुः जलं च आहारः तत्र दातुं किं स्यात् ?

**संन्यासी** - मातः ! खेदः मास्तु । देशः विशालः । अहम् अग्रे गच्छामि ।

(इति गन्तुम् उद्युक्तः)

**रामदासः** - मुनिवर्य ! मुनिवर्य ! तिष्ठतु, क्षणं तिष्ठतु ... ।

**संन्यासी** - वत्स ! देवो दयालुः । चिरं जीवतु वत्स !

(संन्यासी निर्गच्छति ।)

**रामदासः** - आर्य ! ... (स्वगतम्) हन्त ! निर्गतः एव । (प्रकटम्) भगवन् ! का एषा भवतः विडम्बना ! बुभुक्षिताय दातुम् अपि किमपि नास्ति । किं मया एतावत्पर्यन्तं भवान् भक्त्या न आराधितः ? तृप्त्या जीवन्तं मां द्रष्टुं भवान् किं न इच्छति ? एतावदेव वा भवतः भक्तवात्सल्यम् ? धिक् त्वाम्, धिक् त्वाम् ।

(मन्त्रपुस्तकं देवविग्रहस्य उपरि क्षिपति । विग्रहः पतति ।)

यावत् भवान् सम्पत्त्या मां न अनुगृह्णाति तावत् भवतः पूजां न करिष्यामि एव ।

(निर्गच्छति)

- २ -

(पात्रम् एकं शिरसि स्थापयित्वा कर्मकरः प्रविशति ।)

**कर्मकरः** - रामदास ! भोः रामदास !

**नन्दिनी** - (प्रविश्य) कः तत्र ? किम् आवश्यकम् ?

**कर्मकरः** - रामदासः नास्ति वा ?

**नन्दिनी** - नास्ति । प्रायः भिक्षायाचनार्थं निर्गतः स्यात् । कः भवान् ?

**कर्मकरः** - अहं दासः रामः । रामदासस्य दासः रामः । एतत् स्वीकरोतु । दासः रामः दत्तवान् इति रामदासं वदतु ।

(पात्रं ददाति)

**नन्दिनी** - (पात्रे पश्यन्ती) किम् एतत् ? आभरणानि रत्नानि च !! कान्त्या प्रकाशन्ते ! कः एतानि प्रेषितवान् ? भवान् कदा तस्य दासत्वेन नियुक्तः ?

**कर्मकरः** - किम् अधिककथनेन ? 'दासः रामः आगतवान्, एतानि दत्तवान् च' - इति रामदासं वदतु । सः सर्वं जानाति । सः एव विवरणं दद्यात् ।

**नन्दिनी** - (तस्य मुखं दृष्ट्वा) किम् एतत् संवृत्तम् ! रक्तं स्रवति किल भोः ! तिष्ठतु, वस्त्रम् आनयामि ।

(अन्तः गत्वा वस्त्रम् आनयति । कार्पासं स्थापयित्वा तदुपरि वस्त्रेण बध्नाति ।)

कथम् एवं व्रणः संवृत्तः ?

**कर्मकरः -** भवत्याः पतिः अद्य प्रातः मां कोपेन ताडितवान् । तेन अहं व्रणितः अभवम् ।

**नन्दिनी -** आं, गृहवातावरणेन उद्विग्नः आसीत् मम आर्यः । क्षाम्यतु तम् । दारिद्र्यजनितः कोपः अत्र अपराध्यति । इदानीं कथम् अस्ति वेदना ?

**कर्मकरः -** हाम् ! हितम् अनुभवामि । इदानीं सर्वा देवना अपगता । पतिव्रतायाः भवत्याः करस्पर्शेन समग्रा वेदना अपगता । अस्तु तावत्, अहं साधयामि ।

**नन्दिनी -** तिष्ठतु, मुहूर्तं तिष्ठतु । एतावता कालेन आगच्छेत् आर्यपुत्रः ।

**कर्मकरः -** नैव, मया त्वरया गन्तव्यम् । मम आगमनं रामदासाय निवेदयतु ।

(निष्कामति ।)

- ३ -

(एकस्मात् कोणतः भिक्षायाचनां समाप्य रामदासः श्रान्त्या प्रविशति । अपरकोणतः सन्तुष्टा नन्दिनी च ।)

**रामदासः -** नन्दिनि, स्वीकरोतु । भिक्षया तण्डुलाः किञ्चित् प्राप्ताः । एतैरेव यवागुं कृत्वा ...

**नन्दिनी -** क्षिपतु तान् तण्डुलान् । आर्य ! पश्यतु एतानि आभरणानि । अस्मदीयानि एतानि !

(पात्रं प्रदर्शयति ।)

**रामदासः** - (पात्रे पश्यन्) अस्मदीयानि एतानि ! मणि-माणिक्य-कण्ठहारादीनि ! केन दत्तानि ? यः दत्तवान् सः उन्मत्तः मूर्खः वा न स्यात् किल ?

**नन्दिनी** - न असौ तृतीयः । भवतः दासः रामः ! तेन एव दत्तानि एतानि ।

**रामदासः** - रामः ! मम दासः रामः ! कः सः ? निर्धनस्य मम कुतो वा दासः ?

**नन्दिनी** - किं भोः, एवं वदति भवान् ? तेन पुनः पुनः उक्तं - भवतः दासः अहम् इति । अद्य प्रातः सः भवता कोपेन ताडितः अपि ।

**रामदासः** - मया ताडितः ! मया कोऽपि न ताडितः किल ?

**नन्दिनी** - किमर्थम् एवं वदति भवान् ? मया एव औषधोपचारः कृतः ... ।

**रामदासः** - (चिन्तयन् क्षणकालानन्तरम् उद्वेगेन) नन्दिनि, नन्दिनि, कुत्र सः ? कुत्र गतः ?

**नन्दिनी** - न जाने, सः कुत्र गतः इति ... ।

**रामदासः** - नन्दिनि, भवत्या महान् अपराधः कृतः । आगतः सः साक्षात् भगवान् रामः एव । अस्माकं कष्टं परिहर्तुम् आभरणानि दातुं च इच्छन् वेषान्तरेण आगतः आसीत् सः । सः पूजनीयः आसीत् । सत्करणीयः आसीत् । क्षमा प्रार्थनीया आसीत् । मन्दभाग्यः अहम् । हतबुद्धिः अहम् । प्रातः क्षणिकोद्वेगेन तस्य उपरि मन्त्रग्रन्थं क्षिप्तवान् । तेनैव सः व्रणितः ... ।

**नन्दिनी -** किं, भगवान् अस्मद्गृहम् आगतः आसीत् ? साक्षात् भगवान् एव !

**रामदासः -** किम् अन्यत् ? स एव खलु भक्तानां दासः । "अहं भक्तपराधीनः" इति तेनैव उक्तम् अपि । उक्तम् आचरितवान् सः । पापी अहं तस्य दर्शनात् वञ्चितः अभवम् । भगवतः तस्य भक्तवात्सल्यं शङ्कितवान् अहम् । अतः सः वेषान्तरेण आगत्य तत् प्रमाणीकृतवान् ।

पापोऽहं पापकर्माऽहम्
पापात्मा पापसम्भवः ।
त्राहि मां कृपया देव
सर्वपापहरो भव ॥

(अश्रूणि स्रावयन् साष्टाङ्गं नमस्कारं करोति ।
नन्दिनी अपि भक्त्या नमस्करोति ।)

(पटाक्षेपः)

* * *

# गुरुदक्षिणा

- श्री म.रा. कुमारस्वामी

पात्राणि -

कौत्सः

वरतन्तुः

रघुः

द्वारपालकः

मन्त्री

सेवकः

(वरतन्तुमहर्षिः ध्यानमग्नः उपविष्टः अस्ति । पृष्ठतः वेदमन्त्रः श्रूयते । आरम्भे गम्भीरध्वनिना, अन्ते क्रमशः क्षीयमाणध्वनिना)

''वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।''

**कौत्सः** - (प्रविश्य) गुरुवर्य ! अभिवादये ।

(कौत्सः गुरुं प्रणमति ।)

**वरतन्तुः** - आयुष्मान् भवतु । वत्स, अपि कुशलम् ?

**कौत्सः** - गुरोः अनुग्रहेण सर्वं कुशलम् एव ।

**वरतन्तुः** - कौत्स ! भवतः विद्याभ्यासः समाप्तः खलु ? भवान् चतुर्दशविद्यासु पारङ्गतः अस्ति । भवता अधीता विद्या लोकोपकाराय भवतु । भवान् दीर्घायुष्मान् भवतु ।

**कौत्सः** - गुरुदेव, तत् तु सत्यम् । परन्तु इदानीं गुरुदक्षिणा ... ।

**वरतन्तुः** - गुरुदक्षिणासमर्पणं तु शास्त्रानुमतमेव । परन्तु भवान् ब्रह्मचारी सन्, आश्रमे कायेन वाचा मनसा गुरुसेवां कृतवान् किल ? तेनैव अहं सुप्रीतः अस्मि । पुनः गुरुदक्षिणायाः आवश्यकता का ?

**कौत्सः** - आचार्य ! गुरुसेवा तु अस्माकं दैनिकं कर्तव्यम् । तत् कथं गुरुदक्षिणा-समानं भवितुम् अर्हति ?

**वरतन्तुः** - पुत्र ! भवतः गुरुभक्त्या एव अहं प्रसन्नः अस्मि । अलमलं गुरुदक्षिणाविषयक-सम्भाषणेन ।

**कौत्सः -** आचार्य ! अहं तु तावता न तृप्तः । गुरुदक्षिणां दत्त्वा एव गृहं गन्तुम् इच्छामि ।

**वरतन्तुः -** कौत्स ! अत्याग्रहः न शोभते । एतावत्कालं भवान् मम आदेशपालनं कृतवान् । कथम् अद्य उल्लङ्घनं करोति ?

**कौत्सः -** आचार्य ! अत्र आग्रहः कोऽपि नास्ति । धर्मशास्त्र–कारणाम् आज्ञा तथा अस्ति । कृपया गुरुदक्षिणा अङ्गीकरणीया गुरुदेव !

**वरतन्तुः -** (कठिनस्वरेण) वत्स ! अहम् आदिशामि । अलं गुरुदक्षिणाप्रस्तावेन ।

**कौत्सः -** आचार्य ! क्षन्तव्यः अहम् । साङ्गं शास्त्रादेशं पालयामि चेदेव मम तृप्तिः ।

**वरतन्तुः -** अहो ! मम वचनम् उल्लङ्घ्य अपि भवान् शास्त्रादेशं पालयितुम् इच्छति ? अस्तु तर्हि, शास्त्रादेशं पालयन् तृप्तिम् अनुभवतु । महतीं तृप्तिम् अनुभवतु । अहं चतुर्दश विद्याः पाठितवान् किल ? अतः चतुर्दश–कोटि–परिमितानि सुवर्णनाणकानि आनयतु । गच्छतु ।

**कौत्सः -** यथाज्ञापयति गुरुदेवः । अस्तु, गुरोः अनुग्रहः यद्यस्ति, तर्हि असम्भवं किमस्ति ? दक्षिणाम् आनेष्यामि एव । आशीर्वादेन अनुग्राह्यः अयं जनः ।

(कौत्सः वरतन्तुं नमस्कुर्वन् अस्ति । वरतन्तुः तत् अपश्यन् इव गच्छति । कौत्सः निराशया मन्दम् उत्थाय स्वगतं वदति ।)

अहो, चतुर्दश–कोटिपरिमितानि सुवर्णनाणकानि दातव्यानि ! कष्टलभ्यानि एव एतानि । कुतः

आनयामि ? कुत्र गच्छामि ? मम आग्रहस्य परिणामः एषः । अहो ... । गुरुवर्याणां तु धनस्य आवश्यकता नास्ति । ते तु तपोधनाः । तर्हि एषा मम परीक्षा एव स्यात् । आं, परीक्षायां निश्चयेन उत्तीर्णः भवेयम् । अन्यथा ममापि अपयशः । परन्तु ..., कुत्र गच्छामि ? आं, स्मृतम् । अयोध्यानगरे रघुमहाराजः शासनं करोति । सः दानशीलः । तत्रैव गन्तव्यम् ... । गच्छामि ।

– २ –

(रघोः आस्थानम् । रघुः सिंहासने उपविष्टः अस्ति । द्वारपालकः प्रविश्य )

**द्वा. पा.** – जयतु महाराजः । देव ! भवतः दर्शनार्थं कौत्सनामकः ब्रह्मचारी द्वारे स्थितः अस्ति ।

**रघुः** – आ ... कौत्सऋषिः !! प्रवेशयतु । विस्रब्धं प्रवेशयतु । अथवा अहमेव स्वागतार्थम् उपस्थितः भवामि ।

(सेवकः गच्छति । रघुः आसनात् उत्तिष्ठति ।)

(कौत्सः प्रविश्य)

**कौत्सः** – विजयतां महाराजः ।

**रघुः** – स्वागतम् ऋषिवर्य ! स्वागतम् । एतत् आसनम् अलङ्करोतु । अद्य मम परमसौभाग्यमेव । ऋषिवर्यः स्वयमागतः । अपि कुशलम् ? तपोधनाः गुरुवर्याः कुशलिनः खलु ? यागादयः निर्विघ्नं प्रचलन्ति किम् ?

**कौत्सः** – महाराज ! रघोः शासने यज्ञयागादीनां विघ्नः कुतः ? सूर्ये उदिते कथं वा अन्धकारस्य उपस्थितिः ?

रघुः - ऋषिवर्य ! आगमनस्य किमपि विशेषप्रयोजनम् ... ?

कौत्सः - आसीत् । आसीत् महाराज ! किञ्चन विशेषप्रयोजनम् आसीत् । भवतः तु ऋषिजनेषु वंशपरम्परागता भक्तिः । अतः अहं किमपि प्रार्थयितुम् आगतः आसम् । परन्तु ... ।

रघुः - किमर्थं सङ्कोचः ? वदतु कामम् ।

कौत्सः - भवतः हस्ते मृन्मयम् अर्घ्यपात्रं दृष्टवान् । इतः परं किं पुनः प्रष्टुं शक्नुयाम् ? अहम् अन्यत्र गच्छामि ।

रघुः - अहो ऋषिवर्य ! किमिदम् ? एवं न वक्तव्यम् । अद्यावधि कोऽपि मत्समीपम् आगत्य रिक्तहस्तः सन् न प्रतिगतः । कृपया निश्शङ्कं वदतु । कथम् अहं भवतः सेवां कर्तुं शक्नुयां, येन अयम् आत्मा पवित्रीकृतः भवेत् ?

कौत्सः - महाराज ! शृणोतु । मम ब्रह्मचर्याश्रमः समाप्तः । गुरुदक्षिणाविषये गुरोः सकाशे अहम् आग्रहं प्रदर्शितवान् । कुपितः गुरुः चतुर्दशकोटि-परिमितानि सुवर्णनाणकानि आनेतुम् आदिष्टवान् । अतः ... ।

रघुः - एतावदेव किल ? चिन्ता मास्तु । अहं विश्वजिद्यागकारणतः निर्धनः स्याम्, न तु दुर्बलः । भवान् द्वित्राणि दिनानि मम यज्ञशालायां तिष्ठतु । भवतः मनोभीष्टं पूरयिष्यामि । निश्चिन्तः भवतु भवान् । कः तत्र ... ? (सेवकम् आहूय) ऋषिवर्यं यज्ञशालां प्रति नयतु । तत्र अपेक्षिताः व्यवस्थाः भवन्तु ।

(कौत्सः ततः गच्छति ।)

**रघुः -** (स्वगतम्) सुवर्णनाणकानि कुतः आनयामि ? तदपि चतुर्दश–कोटिपरिमितानि ! विश्वजिद्यागे सर्वा सम्पत्तिः दीनजनेभ्यः दत्ता ... । आम् .... अन्यः मार्गः कोऽपि नास्ति । ततः एव । (प्रकटम्) मन्त्रिवर्य ।

**मन्त्री -** (प्रविश्य) उपस्थितोऽस्मि महाराज ।

**रघुः -** सेना सन्नद्धा भवतु । श्वः प्रातः एव कुबेरम् उद्दिश्य दण्डयात्रा करणीया । चतुर्दशकोटि–सुवर्णनाणक–प्राप्त्यर्थम् एषः एकः एव मार्गः ।

**मन्त्री -** यथाज्ञापयति देवः ।

– ३ –

(अनन्तरदिने, उषःकालः । रघुमहाराजः चिन्ताक्रान्तः सन् उपविष्टः अस्ति । मन्त्री अपि पार्श्वे अस्ति । सेवकः प्रविशति ।)

**सेवकः -** महाप्रभो ... महाप्रभो ... !

**रघुः -** (झटिति उत्थाय) किम् ? का वार्ता ? कः विशेषः ?

**सेवकः -** कोशाध्यक्षः निवेदयति यत् – अस्माकं कोषागारं सुवर्णनाणकैः पूर्णम् इति । ह्यः रात्रौ कोषागारे सुवर्णवृष्टिः सञ्जाता इति श्रूयते ।

**रघुः -** किम् ? कोषः सुवर्णनाणकैः पूर्णः वा ? महदाश्चर्यम् !

**मन्त्री -** अत्र आश्चर्यं किमपि नास्ति महाराज । महाराजभयात् नीतिनिपुणः कुबेरः एव युद्धात् पूर्वमेव कोषे सुवर्णवृष्टिं कृतवान् स्यात् ।

रघुः - स्यात् । आनन्दस्य अयं विषयः । तर्हि कौत्सऋषिं सादरम् आह्वयतु ।

(सेवकः गच्छति । कौत्सम् आनयति ।)

रघुः - आगच्छतु ऋषिवर्य ! भगवदनुग्रहेण विनायासं धनराशिः लब्धः । ह्यः रात्रौ मम कोषागारे सुवर्णवृष्टिः सञ्जाता । तत्र यत् अस्ति तत् सर्वं भवदीयम् एव ।

**कौत्सः** - अहो ! तत्सर्वं मम एव ? किन्तु अधिकधनेन मम किं वा प्रयोजनम् ? मम तु गुरुदक्षिणादानार्थं यावद् आवश्यकं तावत् एव पर्याप्तम् । शिष्टं मह्यं न अपेक्षितम् ।

रघुः - नैव मुनिवर्य ! तत्सर्वं भवदर्थम् एव प्राप्तम् । कृपया नयतु ।

**कौत्सः** - महाराज ! मुनिवृत्तेः मम अधिकधनेन किं प्रयोजनम् ? गुरुदक्षिणादानार्थं चतुर्दशकोटि-सुवर्णनाणकानि अपेक्षितानि । तावदेव ददातु ।

रघुः - मुनिवर्य ! भवदर्थमित्येव कुबेरेण प्रेषितानि एतानि । तत्र अहम् एकं नाणकम् अपि स्वीकर्तुं न इच्छामि ।

**मन्त्री** - मुनिवर्य ! गरुदक्षिणार्थं यावदावश्यकं ततोऽप्यधिकं भवान् न इच्छति । सर्वं समर्पणीयम् इति महाराजः इच्छति । अतः एवं भवतु - अधिकं यदस्ति तत् वरतन्तुमहर्षये समर्प्य - "महाराजेन प्रेषितम्" इति निवेदयतु । आश्रमव्यवस्थार्थं वटूनाम् अध्ययनार्थं च तस्य उपयोगः भवतु ।

**कौत्सः –** अस्तु तावत्, महाराज। भवादृशानाम् उदाराणां कारणतः एव लोके वृष्टिः समृद्धिः च भवति। अहं साधयामि तावत्। चिरं जीवतु भवान्।

(पटाक्षेपः)

* * *

# बालहृदयम्

- श्री जि. महाबलेश्वरभट्टः

**पात्राणि -**

गुरुः

चोरबालः

सावित्री (चोरस्य माता)

सुरेशः

गीता (सुरेशस्य माता)

राजकीयः पुरुषः (गीतायाः पतिः)

रमेशः

उमा (रमेशस्य माता)

आरक्षकत्रयम्

प्रशान्तः, चन्द्रशेखरः, अशोकः, अरविन्दः, गणेशः इत्यादयः।

(रङ्गस्य अग्रभागे एव प्रकाशः अस्ति । तत्र पङ्क्तिशः छात्रैः स्थितम् । सर्वेऽपि प्रार्थयन्ते ।)

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥

(प्रार्थनायाः अन्ते सर्वत्र रङ्गे प्रकाशः भवति । तत्र एकः आसन्दः, एका उत्पीठिका च भवति । छात्राः क्रमशः गत्वा उत्पीठिकायाः पुरतः पङ्क्तिशः उपविशन्ति । गुरुः प्रविशति । तदा छात्राः उपविशन्ति । गुरुः उपस्थितिपुस्तकं दृष्ट्वा नामानि सम्बोधयति । सर्वेऽपि विद्यार्थिनः स्वनामश्रवणानन्तरम् उत्थाय ''अस्मि'' - इत्युक्त्वा उपविशन्ति ।)

**गुरुः** - (उच्चैः स्वरेण) प्रशान्त, चन्द्रशेखर, सुरेश, रमेश, प्रदीप ...

**सुरेशः** - प्रदीपः मातामहस्य गृहं गतः । अतः न आगतः ।

**गुरुः** - अशोक, कृष्ण, गणेश, अरविन्द, रमाकान्त ...

**प्रशान्तः** - रमाकान्तः उक्तवान् - ''अद्य मम गृहं मातामही आगतवती । अतः शालां न आगच्छामि'' इति ।

**गुरुः** - लक्ष्मि, वाणि, सावित्रि ।

(अत्पीठिकायाम् उपस्थितिपुस्तकं निधाय पाठ्यपुस्तकं स्वीकृत्य)

रमेश ! परह्यः कः पाठः अध्यापितः ? (प्रश्ने कृते छात्राः स्थित्वा एव उत्तरम् उक्त्वा उपविशन्ति ।)

**रमेशः** - नवमः पाठः कृतः । पाठस्य नाम 'सङ्क्षेपरामायणम्' इति ।

**गुरुः -** ह्यः कतमः पाठः पाठितः चन्द्रशेखर ?

**च. शे. -** दशमः पाठः। पाठस्य नाम 'महात्मा गान्धिः' इति। अल्पः भागः अवशिष्टश्च।

**गुरुः -** भवतु, अवशिष्टं भागम् अद्य पाठयित्वा समापयामि। सर्वैः सङ्क्षेपरामायणं सम्यक् गृहे पठितं वा ?

**अशोकः -** मया त्रिवारं पठितम्।

**गणेशः -** मया पञ्चवारं पठितम्।

**प्रशान्तः -** अहं दशवारं पठितवान् आचार्य !

**गुरुः -** सुरेश, भवान् न पठितवान् ?

**सुरेशः -** अहं द्विवारं पठितवान् आचार्य !

**गुरुः -** सर्वेऽपि तूष्णीम् उपविशन्तु। प्रश्नान् पृच्छामि। युक्तम् उत्तरं सर्वैः दातव्यम्।

**सर्वे -** वयं सर्वे उत्तरं दातुं सिद्धाः आचार्य।

**गुरुः -** अहं यं पृच्छामि सः एव उत्तरं वदेत्। तदा अन्ये तूष्णीम् उपविशेयुः। ज्ञातं वा ?

**सर्वे -** ज्ञातम्।

**गुरुः -** अरविन्द, कथयतु - 'अयोध्यापतिः कः ?'

**अरविन्दः -** दशरथः।

**गुरुः -** वाक्यरूपेण उत्तरं वदतु। 'अयोध्यापतिः कः ?'

**अरविन्दः -** अयोध्यापतिः दशरथः।

गुरुः - तस्य पत्न्यः काः ? अशोक ! भवान् उत्तरं वदतु ।

अशोकः - दशरथस्य पत्न्यः – कौसल्या, सुमित्रा, कैकेयी च ।

गुरुः - दशरथस्य कति पुत्राः इति गणेशः वदतु ।

गणेशः - दशरथस्य चत्वारः पुत्राः ।

प्रशान्तः - आचार्य ! तदा कुटुम्बनियन्त्रणं न आसीत् वा ? यतः दशरथस्य चत्वारः पुत्राः !

गुरुः - (भर्त्सयन्) रे वाचाल ! तूष्णीं तिष्ठतु ।
कुटुम्बनियन्त्रणं केन पृष्टम् ? केन बोधितम् ?

प्रशान्तः - केनापि न बोधितम् । किन्तु गृहस्य शालायाः च भित्तौ भित्तौ, वाहने वाहने, प्रतिपत्रिकं पठ्यते । आकाशवाण्यां श्रूयते । दूरदर्शने च श्रूयते दृश्यते च ।

गुरुः - रे, सहस्रबुद्धे, जिह्वां मा प्रसारयतु । असम्बद्धप्रलपनं स्थगयतु । पाठ्यगतं विषयं विना अन्येषु अनुचितेषु विषयेषु भवान् सर्वज्ञः । वदतु तावत् –
'विश्वामित्रेण सह राम–लक्ष्मणौ किमर्थं दशरथः प्रेषितवान् ?' इति ।

प्रशान्तः - तौ परस्परं गृहे कलहं कुरुतः इति । (सर्वे हसन्ति ।)

गुरुः - रे मूर्ख ! दशवारं पठितवान् इति पूर्वम् उक्तवान् । किं भवान् पाठ्यपुस्तकं पठितवान्, उत मार्गे भित्तिपत्रं दशवारं पठितवान् ?

(प्रशान्तः नतवदनः तिष्ठति ।)

हुम्, उपविशतु । इतः परम् असम्बद्धविषयं परित्यज्य पाठ्यपुस्तकस्य विषयं पठतु । (प्रशान्तः उपविशति ।) छात्राः ! सप्ताहात् पूर्वं दूरदर्शने संस्कृतनाटकं प्रदर्शितम् । किं तत् स्मरन्ति ?

**सुरेशः -** स्मरामः ! 'चोरः बालः' इति नाटकम् । (उच्चस्वरेण) सः चोरः बालः यदा आरक्षकैः गृहीतः -

(रङ्गस्य अपरपार्श्वे आरक्षकैः बद्धः चोरबालः प्रविशति । गुरुः इत्यादयः रङ्गे एव तूष्णीम् उपविशन्ति । चोरबालकं परितः प्रकाशः भवति । अन्यत्र अन्धकारः ।)

(ततः प्रविशति चोरबालः आरक्षकैः बद्धः)

**आ. १ -** रे चोर ! इदं घटीयन्त्रं कदा चोरितम् ?

**चोरः -** मासात् पूर्वं चोरितवान् ।

**आ. २ -** अनेन सह भवान् किं किं चोरितवान् ?

**चोरः -** अनेन सह एकां करघटीम्, ऊरुकद्वयं, युतकचतुष्टयं च अहं चोरितवान् ।

**आ. ३ -** तानि सर्वाणि कुत्र स्थापितानि ?

**चोरः -** तानि सर्वाणि न्यूनमूल्येन अहं विक्रीतवान् । केवलं शतं रूप्यकाणि लब्धानि ।

**आ. १ -** तानि रूप्यकाणि कुत्र ? युतकस्य कोशे सन्ति वा ? बहिः निष्कासयतु ।

**चोरः -** सर्वाणि उपाहारार्थं चलनचित्रं द्रष्टुं च व्ययितानि । इदानीं केवलं षड् रूप्यकाणि सन्ति । (रूप्यकद्वयस्य त्रीणि धनपत्राणि दर्शयति ।)

**आ. २ -** हुं, सर्वम् अत्र ददातु ।

**चोरः -** स्वीकरोतु श्रीमन् ! (ददाति ।) कृपया मां मुञ्चतु । इतः परम् एतादृशं कार्यं न करोमि । प्रतिज्ञां करोमि – "इतः परं चौर्यकार्यं कदापि न करोमि" इति ।

**आ. ३ -** रे मूर्ख ! केवलं षड् रूप्यकाणि स्वीकृत्य भवन्तं विमुक्तं कुर्मः वा ? शतं रूप्यकाणि स्वीकृत्य अपि बहून् न विमुक्तवन्तः । (एकम् आरक्षकं दृष्ट्वा) मित्र, भवते रूप्यकद्वयम् । (ददाति । अपरम् आरक्षकं दृष्ट्वा) भवते रूप्यकद्वयम् । (ददाति ।) मह्यं रूप्यकद्वयम् । (कोशे स्थापयति ।) हुम्, अन्येषु दिवसेषु भवान् किं किं चोरितवान् ?

**चोरः -** भोः, अन्येषु दिवसेषु अहं किमपि न चोरितवान् । एकवारम् एव चौर्यं कृतवान् । सत्यं कथयामि । एकवारमेव चौर्यं कृतवान् ।

**आ. ३ -** रे, वैधवेय, असत्यं कथयति वा ? मूर्ख, सत्यं कथयतु । अन्यथा पादेन प्रहरामि । हुं, कथयतु ।

(पादम् उद्धरति ।)

**चोरः -** कथयामि, कथयामि । पश्चात् पूर्वम् एकां द्विचक्रिकां चोरितवान् ।

**आ. १ -** कुत्र सा द्विचक्रिका ? द्विचक्रिकाम् अपि विक्रीतवान् वा ?

**चोरः -** सत्यं, विक्रीतवान् । केवलं पञ्चसप्ततिः रूप्यकाणि लब्धानि ।

**आ. २ -** तानि रूप्यकाणि अपि व्ययितानि वा ?

चोरः - सत्यं, तानि अपि व्ययितानि । केवलं पञ्चसप्ततिः पैसाः सन्ति ।

(युतकस्य अपरकोशात् उद्धृत्य दर्शयति ।)

आ. १ - महामूर्ख ! सर्वं व्ययितवान् । केवलं पञ्चसप्ततिः पैसाः सन्ति । भवतु ददातु । (तस्य हस्ततः स्वयमेव स्वीकरोति ।) मित्र, भवते पञ्चविंशतिः । मित्र, भवते पञ्चविंशतिः । (स्वकोशे पञ्चविंशतिं स्थापयति ।)

चोरः - इदानीं कृपया मां मुञ्चतु । कृपया मां मुञ्चतु । कृपया मां मुञ्चतु । (एकैकमुद्दिश्य कथयति ।)

आ. २ - केवलं पञ्चसप्ततिं पैसाः दत्त्वा - 'मुञ्चतु मुञ्चतु' इति कथयति वा ?

आ. ३ - अहो ! गणनाम् एषः सम्यक् जानाति । रे महामूर्ख, गच्छतु आरक्षकालयम् । तत्र अस्माकं पादत्राणस्य रुचिः किञ्चित् आस्वाद्यताम् । हुं, गच्छतु । (नुदति ।)

सावित्री - (धावन्ती प्रविश्य) भोः भोः, कृपया मम पुत्रं मुञ्चतु । कृपया मुञ्चतु । (एकैकमुद्दिश्य वदति ।)

आ. १ - एतत् भवत्याः पुत्ररत्नं वा ?

सावित्री - सत्यम्, एषः मम एव पुत्रः । कृपया मुञ्चतु । एकवारमेव सः चोरितवान् । इतः परम् एतादृशं कार्यं सः न करोति । अहमपि पुनः पुनः प्रहृत्य शिक्षयामि । सन्मार्गे प्रवर्तितुं बोधयामि । कृपया मुञ्चतु ।

आ. २ - यत् वक्तव्यं तत्सर्वम् आरक्षककार्यालयम् आगत्य निवेदयतु । वयं किमपि अत्र न शृणुमः ।

सावित्री - साञ्जलिबन्धं प्रार्थये । कृपया मुञ्चतु मम पुत्रम् ।

चोरः - अम्ब, अत्र आगच्छतु । किञ्चित् वक्तव्यम् अस्ति ।

(अम्बा समीपं गत्वा कर्णं पुत्रस्य मुखे प्रसारयति । तदा बालः तस्याः कर्णं दशति ।)

सावित्री - (चीत्कारं कुर्वती) हा ... पुत्र, किमर्थं भवान् मम कर्णं दशति ? अहं भवन्तं मोचयितुम् आगतवती ?

आ. ३ - रे दुष्ट ! मातरमपि प्रहरति ? कियद् औद्धत्यम् एतस्य ! (प्रहर्तुम् उद्युङ्क्ते ।)

चोरः - भोः शृण्वन्तु, अहं बाल्ये शालायाम् एकां लेखनीं चोरितवान् । तदा एषा मम माता माम् अभिनन्दितवती । अपरस्मिन् दिने अहम् अन्यस्य पुस्तकम् अपहृतवान् । तदा अपि एषा मां प्रशंसितवती । एवमेव क्रमशः अहम् अङ्कनीं, जलस्यूतं, भोजनपात्रं च चोरयितुम् आरब्धवान् । तदापि मम माता मां न भर्त्सितवती । प्रत्युत प्रोत्साहितवती । 'चौर्यं नाम अपराधः' इति भावना एव मम मनसि न उत्पन्ना । अतः चौर्यं सदा कुर्वन् इदानीं महाचोरः संवृत्तः अस्मि । इदानीं मम लज्जा भवति । दुःखमपि भवति । किं करवाणि ? (रुदन्) सर्वे जनाः मां चोरः चोरः इति कथयन्ति । अम्ब, बाल्ये अपराधे कृते अहं भवत्या न दण्डितः । अतः इदानीम् इयं दुरवस्था । एतस्य सर्वस्यापि भवती एव

मूलं कारणम् । (माता नतवदना तिष्ठति । आरक्षकान् उद्दिश्य) भोः, इदानीं कथयन्तु भवन्तः । किं मम अपराधः अस्ति अत्र ? (परस्परं मुखं पश्यन्ति ।) किमर्थं तूष्णीं तिष्ठन्ति ? किमपि उत्तरं कथयन्तु भोः । उत्तरं कथयन्तु । (सर्वे तूष्णीं तिष्ठन्ति ।) भवतु । अपराधस्तु कृत एव । अतः अहं दण्डार्हः एव ।

(सरभसं गच्छति । आरक्षकाः तम् अनुसरन्ति । माता शनैः शनैः नतवदना गच्छति ।)

(गुरुः इत्यादयः यत्र उपविष्टाः तत्र प्रकाशः ।)

**गुरुः -** छात्राः, पश्यन्तु । बाल्ये वयं यत् अभ्यस्यामः, यं संस्कारं प्राप्नुमः, स एव समग्रे जीवने अनुवर्तते । अतः समीचीनः संस्कारः बाल्ये एव भवेत् । अतः बालाः भवन्तः सत्संस्कारं प्राप्तुं प्रयत्नं कुर्वन्तु ।

**सर्वे -** वयं सत्कार्यमेव कुर्मः । कदापि दुष्कार्यं न कुर्मः, आचार्य !

**गुरुः -** भवतु । ह्यः महात्मनः गान्धेः पाठः किञ्चित् अवशिष्टः किल ? तं पाठं समापयामि । प्रशान्त, गान्धेः सम्पूर्णं नाम किम् ?

**प्रशान्तः -** (उत्थाय तूष्णीं तिष्ठति ।)

**गुरुः -** चन्द्रशेखर, भवान् वदतु ।

**च. शे. -** (उत्थाय तूष्णीं तिष्ठति ।)

**गुरुः -** रमेश, भवान् वदतु ।

**रमेशः -** मोहनदास करमचन्द गान्धि ।

**गुरुः -** रमेश, पुनः एकवारम् उत्तरम् उक्त्वा एतयोः नासिकां गृहीत्वा कपोलाभ्यां चपेटां ददातु।

**रमेशः -** (तूष्णीं तिष्ठति।)

**गुरुः -** हुं, मया यदुक्तं तत् करोतु।

**रमेशः -** गान्धेः सम्पूर्णनाम मोहनदास करमचन्द गान्धि इति। (तयोः नासिकां गृहीत्वा ताडयति।)

**गुरुः -** त्रयः अपि उपविशन्तु। इदानीम् अवशिष्टाः पङ्क्तीः पाठयामि। (पुस्तकम् उद्घाट्य पठति।)

''भारतं विहाय आङ्ग्लाः लण्डन्नगरं प्रति प्रस्थिताः। ततो भारतवर्षं स्वतन्त्रम् अभवत्। अत्र च महात्मा गान्धिः प्रधानं कारणम्। किन्तु स्वातन्त्र्यप्राप्त्यनन्तरम् एकस्मिन्नेव वर्षे अतीते सः घातुकेन मारितः। अहो! कीदृशं पारितोषिकं महात्मनः!''

**प्रशान्तः -** कस्मिन् दिनाङ्के मृतः महात्मा गान्धिः?

**गुरुः -** (पुस्तकपत्रं पुनः पुनः दृष्ट्वा) अत्र दिनाङ्कः न लिखितः। अन्यत्र दृष्ट्वा श्वः उत्तरं कथयिष्यामि।

**प्रशान्तः -** गुरुः एव उत्तरं न जानाति। (इति चन्द्रशेखरं प्रति उक्त्वा गुरुम् अङ्गुल्या प्रदर्श्य स्वनासिकां गृहीत्वा कपोलयोः ताडनाभिनयं करोति।)

**गुरुः -** चन्द्रशेखर, प्रशान्तः किम् उक्तवान्?

**च.शे. -** प्रशान्तः पृच्छति – ''गुरुः एव उत्तरं न जानाति। अतः आचार्यस्य नासिकां गृहीत्वा इदानीं कपोलाभ्यां चपेटां कः ददाति?'' इति।

**गुरुः -** रे मूर्खशिखामणे ! पृष्टेषु प्रश्नेषु एकस्यापि समुचितम् उत्तरं दातुं सामर्थ्यं नास्ति । इदानीं जिह्वां प्रसार्य प्रलपति । (घण्टानादः श्रूयते ।) इदानीं घण्टानादः कृतः । श्वः गणितं पाठयिष्यामि । इदानीं सर्वे गच्छन्तु ।

(सर्वे क्रमशः गच्छन्ति । गुरुः उपस्थितिपुस्तकं, पाठ्यपुस्तकं च स्वीकृत्य मन्दं मन्दं बहिर्द्वारम् आगच्छति । सुरेशस्य माता गीता आगच्छति ।)

भवती सुरेशस्य माता किल ?

**गीता -** (अश्रुत्वैव, अध्यापकम् उद्दिश्य) रे, श्रीधर, कियान् तव अहङ्कारः ? बुद्धिः स्वाधीना खलु अस्ति ?

**गुरुः -** आर्ये, अन्येषु कथं व्यवहरणीयम् इति प्रथमं जानातु । युष्मदादि-शब्दप्रयोगः सर्वत्र न उचितः । भवतु, कोपस्य कारणं किम् ? विषयः कः इति प्रथमं विवृणोतु ।

**गीता -** मम पुत्रं सुरेशं भवान् ह्यः भर्त्सितवान् इति प्रशान्तः उक्तवान् । अपि सत्यम् ?

**गुरुः -** किमर्थम् अहं भर्त्सितवान् इति स एव निवेदयतु । (उच्चैः स्वरेण) कः कोऽत्र भोः ?

**अशोकः -** अहम् अस्मि । किं करवाणि ?

**गुरुः -** सुरेशः कुत्र ? तम् आह्वयतु ।

**अशोकः -** सः तत्र क्रीडन् अस्ति । आह्वयामि । (गच्छति ।)

**सुरेशः -** (प्रविश्य मातरं दृष्ट्वा) अये, अम्बा आगतवती । अम्ब, भवती ... किमर्थम् आगतवती ?

**गुरुः -** सुरेश, ह्यः, अहं भवन्तं किमर्थं भर्त्सितवान् ?

**सुरेशः -** (साश्चर्यम्) ह्यः भवान् मां न भर्त्सितवान् खलु ?

**गीता -** 'भवान् किमर्थं न पठितवान्' इति उक्त्वा बहु भर्त्सनं कृतं गुरुणा इति प्रशान्तः उक्तवान् ।

**सुरेशः -** (स्मरन्) आम्, आम् । गुरुः बहून् प्रश्नान् पृष्टवान् । एकस्यापि प्रश्नस्य उत्तरं न दत्तवान् अहम् । अतः मां किञ्चित् भर्त्सितवान् गुरुः । यद्यपि अत्र अहमेव अपराधी, किन्तु तत्र कारणं तु भवती एव ।

**गीता -** कथम् अहं कारणं भवेयम् ?

**सुरेशः -** आचार्य, परह्यः 'दम्पत्योः कलहः' इति नाटकं दृष्टम् । नाटकस्य दर्शने मम इच्छा न आसीत् । तथापि, 'नाटकाय गन्तुं मया सह कोऽपि नास्ति' इति अनिच्छन्तमपि माम् एषा माता नीतवती । अतः, अहं पाठं न पठितवान् । तस्मात् मम मातरमेव भर्त्सयित्वा प्रेषयतु ।

(इत्युक्त्वा बहिर्धावति ।)

**गुरुः -** पश्यतु बालहृदयम् । स एव स्वयं विस्मृतवान् भर्त्सनम् । किमर्थं तद् उद्बोधयितुं भवती प्रयत्नं करोति ? बालेषु भर्त्सनं, ताडनं, प्रोत्साहनं, प्रीतिं च काले काले प्रदर्शयामः । तत्र वयं सम्यक् जानीमश्च । न तत्र माता-पित्रोः चञ्चू-प्रवेशः उचितः ।

(उभावपि गच्छतः । सर्वत्र रङ्गे दीपनिर्वापणम् ।)

- २ -

(सर्वत्र रङ्गे प्रकाशः । रङ्गस्य कोणे एका उत्पीठिका भवति ।)

**सुरेशः -** (पुस्तकस्यूतेन सह धावन् प्रविशति ।) अम्ब ! अम्ब ! क्रीडितुं गच्छामि । विलम्बः जातः ।

(उत्पीठिकायां पुस्तकस्यूतं प्रक्षिप्य बहिर्धावितुं प्रवृत्तः ।)

**गीता -** (प्रविश्य) वत्स ! तिष्ठतु, तिष्ठतु । क्षीरं पीत्वा यथेष्टं क्रीडतु । क्षीरं मन्दोष्णमेव अस्ति । आनीय ददामि । पीत्वा गच्छतु ।

(अन्तः गच्छति ।)

**सुरेशः -** शीघ्रम् आनयतु । अन्धकारेण आवृतं भवति क्रीडाङ्गणम् ।

**रमेशः -** (पञ्चषैः बालकैः सह प्रविश्य उच्चैः स्वरेण) सुरेश ! शीघ्रम् आगच्छतु क्रीडितुम् । वयं सर्वे अत्र सम्मिलिताः ।

**सुरेशः -** (अन्तः एव स्थित्वा) क्षीरं पीत्वा आगच्छामि । (बहिः आगच्छन्) अम्ब ! शीघ्रं ददातु क्षीरम् ।

**गीता -** (प्रविश्य क्षीरचषकं ददाति ।) शनैः शनैः पिबतु । अधः मा निस्सारयतु । (बहिः आगत्य) रे बालकाः ! कोलाहलं मा कुर्वन्तु । सुरेशः इदानीम् एव आगच्छति । (प्रतिनिवृत्य) सुरेश ! अस्माकं गृहस्य पुरतः एव क्रीडन्तु ।

**सुरेशः -** (चषकम् उत्पीठिकायां स्थापयित्वा) भवतु । अत्रैव क्रीडामः । (बहिः आगत्य बालैः सह सम्मिलति ।)

**गीता -** सुरेश ! मा धावतु । शनैः शनैः गच्छतु । स्खलन् पतितो भवति । (गीता अन्तः गच्छति ।)

**रमेशः -** इदानीं 'गोव्याघ्रम्' इति क्रीडां क्रीडाम । सर्वेऽपि मण्डलाकारेण तिष्ठन्तु । अनन्तरम् एकैकोऽपि एकैकस्य हस्तं शृङ्खलारूपेण गृह्णातु । (सर्वेऽपि तथा एव कुर्वन्ति ।) अहं व्याघ्रः । सुरेशः गौः । अहं मण्डलात् बहिः भवामि । सुरेशः मण्डलस्य अन्तः भवति । व्याघ्रः अहं गां सुरेशं ग्रहीतुं प्रयत्नं करोमि । किन्तु भवद्भिः गौः रक्षणीया । सर्वैः ज्ञातं वा क्रीडास्वरूपम् ?

**सर्वे -** आं, ज्ञातम् ।

**रमेशः -** सुरेश ! भवान् गौः किल ? अतः मण्डलस्य अन्तः गच्छतु ।

**सुरेशः -** भवतु । अहम् अन्तः प्रविशामि । (मण्डलस्य अन्तः तिष्ठति ।)

**रमेशः -** इदानीं क्रीडायाः आरम्भः । सुरेशः 'एकं, द्वे, त्रीणि' इति वदति । अन्ते अहं तं ग्रहीतुं प्रयत्नं करोमि । भवन्तः तं रक्षन्तु । सुरेश ! वदतु ।

**सुरेशः -** एकं ... द्वे ... त्रीणि ... । (अर्धनिमेषं यावत् क्रीडन्ति ।)

(तदा सर्वे - ''धेनुरियं मम धेनुरियम् ।
धेनुरियं मम धेनुरियम् ।
जननीयं मम जननीयम् ।
जननीयं मम जननीयम्''

इति गायन्ति । रमेशः अन्तः गत्वा सुरेशं गृह्णाति ।
तदा सुरेशः पतति । तयोः कलहः प्रवृत्तः ।)

**सुरेशः -** रे, किमर्थं भवान् मां पातितवान् ?

**रमेशः -** अहं भवन्तं ग्रहीतुं प्रयत्नं कृतवान् । तदा भवान् पतितवान् । अहं किं करोमि ?

**सुरेशः -** तथापि भवान् महता बलेन माम् आकृष्टवान् । अतः एव अहं पतितवान् । पश्यतु ! घृष्टो मम पादः, रक्तसिक्तश्च ।

**रमेशः -** अहं किं करोमि भोः ? क्रीडायाम् एतत् स्वाभाविकम् ।

**सुरेशः -** रे मूर्ख ! कृतं कार्यं किं समर्थयति ? न याचते क्षमाम् ?

**रमेशः -** क्षमा याचनीया वा ? साष्टाङ्गप्रणामं न इच्छति भवान् ? अरे, धनिकपुत्र, क्षमाम् इच्छति वा क्रीडनसमये ? रे गच्छतु, गच्छतु ।

(इत्युक्त्वा नुदति । अत्रान्तरे द्वौ बालौ गत्वा तयोः मातरौ आहूय आनयतः । उभेऽपि स्वीयपुत्रौ गृहीत्वा पृथक्कुरुतः ।)

**गीता -** सुरेश ! किमर्थं द्वयोः कलहः सम्पन्नः ?

**सुरेशः -** एषः रमेशः मां गृहीत्वा अधः पातितवान्, पश्यतु ! घृष्टो मे पादः ।

**रमेशः -** अम्ब ! उद्देशपूर्वकम् अहं तं न पातितवान् । यदा अहं ग्रहीतुं प्रयत्नं कृतवान् तदा स्खलनेन पतितवान् एषः ।

**उमा -** यथाकथं वा भवतु । अद्य क्रीडया अलम् । गृहम् आगच्छतु ।

**गीता -** (उमाम् अपश्यन्ती, किन्तु तस्यै श्रावयन्ती उच्चैः स्वरेण) पुत्राणां शरीरं वर्धयन्ति, न बुद्धिम् । न शिक्षन्ते आचारम् । केवलं भूमेः भाराय भोजनव्ययाय च पुत्रान् पोषयन्ति ।

**उमा -** (सापि तथैव) इदं वचः स्वविषयेऽपि अन्वितं भवति । तथापि आत्मानं सर्वज्ञं मन्यमानाः अन्यान् उपदिशन्ति । एषा खलु लोकस्य रीतिः ।

**गीता -** रे, भवत्याः पुत्ररत्नेन किमर्थं मम पुत्रः पातितः ? अथवा पिता प्रौढशालायाम् अध्यापकः । तत्र सः सर्वान् छात्रान् ताडयति । पितुः गुणः एव पुत्रेऽपि सङ्क्रान्तः । यथा पिता तथा पुत्रः । अतः किमत्र आश्चर्यम् अस्ति ?

**उमा -** रे गीते ! किमर्थं मम पतिम् आक्षिपति भवती ? भवत्याः पतिः राजकीयः पुरुषः । असत्यकथनं स्वकर्तव्यं मन्यते सः । उत्कोचग्रहणं स्ववृत्तिरिति तस्य सिद्धान्तः । अन्येषु भयोत्पादनं तस्य नित्यकर्म भवति । अत एव भवती तालपत्रं, कण्ठहारम्, अन्यानि सुवर्णाभरणानि च सदा धरति । पतिः अपि अङ्गुलीचतुष्टये अङ्गुलीयकानि धृत्वा पर्यटति ।

**गीता -** (सकोपम्) मम पतिः उत्कोचं वा गृह्णाति, चौर्यं वा करोति, सुवर्णं राशिरूपेण वा सङ्गृह्णाति । किं तेन ? असूयया भवती यत्किमपि प्रलपति । स्वपतेः

उपाध्यायस्य यत्किञ्चिदपि कर्तुं सामर्थ्यं नास्ति। अतः अन्येषु दोषान्वेषणं करोति।

**उमा -** भवत्याः पत्युः सामर्थ्यं लोक एव जानाति। निर्वाचने मूलधनमपि नष्टम्। तथापि निर्लज्जः सः शिरः उन्नमय्य सर्वत्र अटति। राजकीयपुरुषाणाम् अपमानशब्दस्य परिचयः एव नास्ति खलु ?

**गीता -** निर्वाचने पराजितोऽपि बहूनां सङ्घानाम् अध्यक्षः मम पतिः। बहूनां मन्त्रिणां परिचयोऽपि अस्ति। अतः यथापूर्वं मम पत्युः सामर्थ्यम् अस्ति एव।

**उमा -** सत्यं, सत्यम्! यथापूर्वमेव अस्ति। चोराणां प्रमुखैः सह पूर्वं सम्बन्धः आसीत्। सः सम्बन्धः इदानीं वर्धितः।

**गीता -** रे अनृतवादिनि! एषः विषयः साक्षात्कृतो वा भवत्या ? भवती किमपि किमपि चिन्तयित्वा वृथा प्रजल्पति।

**उमा -** सर्वोऽपि विषयः साक्षात्करणीय एव किम् ? इयं वार्ता सर्वासु पत्रिकासु प्रकटीकृता। विद्यावन्तः चक्षुष्मन्तः जनाः सर्वेऽपि पठितवन्तः एव। सर्वेषां जिह्वायाम् इयं वार्ता नरीनृत्यते।

**सुरेशः -** भो रमेश! आगच्छतु, वयं क्रीडामः। एतयोः कलहः प्रवर्तताम्।

(सर्वे तयोः पृष्ठभागे गोलकक्रीडायाः अभिनयं शनैः शनैः कुर्वन्ति।)

**गीता -** पत्रिकायां यत्किञ्चित् लिखन्ति। सर्वाः अपि पत्रिकाः असत्यपूर्णाः। जनास्तु अल्पमपि विषयं

दीर्घदीर्घतरं कुर्वन्ति । मशके गते, गजः पलायितः इति कथयन्ति ।

**उमा -** हुम्, आत्मवत् मन्यते जगत् । समस्तमेव प्रपञ्चम् असत्यमयं, सर्वान् लोकाँश्च मूढान् मन्यते भवती । स्यान्नाम, आ जन्मतः अद्यप्रभृति पत्रिकायाः स्वरूपं भवत्या दृष्टं वा ?

(ततः प्रविशति गीतायाः पतिः राजकीयः पुरुषः ।)

**रा. पु. -** सुरेश, अत्र आगच्छतु । (सः आगच्छति ।) मातुः तया सह कलहस्य कारणं किम् ?

**सुरेशः -** अहं न जानामि ।

**रा. पु. -** गच्छतु, कलहस्य कारणं पृष्ट्वा तां समाह्वयतु ।

**सुरेशः -** (मातुः समीपं गत्वा तस्याः करं गृहीत्वा) अम्ब ! पिता पृच्छति – 'कण्ठस्थिताः सर्वाः धमनीः त्रुटयन्ती किमर्थम् उच्चैः स्वरेण भवती कलहं करोति ?' इति ।

**गीता -** रे, वैधवेय ! कलहस्य अङ्कुरार्पणं कृत्वा, तस्य कारणं पृच्छति भवान् ? (ताडयितुं प्रवृत्ता । सः धावन् पितुः समीपम् आगच्छति । सा अपि तम् अनुसरति ।)

**रा. पु. -** (विहस्य) 'शिवा भवानी रुद्राणी मृडानी चण्डिकाम्बिका' । अये, तिष्ठतु । कलहस्य निमित्तम् एषः सुरेशः, उत भवत्याः जिह्वाचापल्यम् ? (सुरेशः पुनः बालैः सह क्रीडति ।)

गीता - हुम्, तादृशः पुत्रः, ईदृशः पतिः । अनयोः मध्ये सर्वेषां निन्दापात्रम् अहमेव भवामि । एतत् मम दौर्भाग्यम् ।

रा. पु. - भवतु, किं संवृत्तम् ?

गीता - सुरेशस्य रमेशस्य च क्रीडासमये मुष्टीमुष्टि युद्धं संवृत्तम् । एतदेव अवलम्ब्य मम च तस्याः च कलहः सम्पन्नः ।

रा. पु. - किं भवत्योः केशाकेशि युद्धं न प्रवृत्तं वा ?

गीता - प्रवृत्तमेव अभविष्यत्, यदि भवान् न आगमिष्यत् ।

रा. पु. - एतदर्थमेव उच्यते, स्त्रीणां बुध्द्यपेक्षया बालानां हृदयं निष्कल्मषं भवति इति । तत् बालहृदयं कदापि पङ्किलं न कुर्यात् । आगच्छतु, गृहं प्रविशाम ।

(तौ मन्दं मन्दं गृहं प्रविशतः । बालाः क्रीडन्तः एव तिष्ठन्ति । रङ्गः शनैः शनैः अन्धकारेण परिवृतः भवति ।)

(नेपथ्ये)

बालानां हृदयं नित्यं निर्मलं दर्पणोपमम् ।
तत्र सर्वेऽवलोकेरन् स्वीयान् दोषान् गुणाँस्तथा ॥

* * *